॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला

५६



# ऋजुपाणिनीयम्

( साङ्गम् )

संग्रहीता—

म० म० पण्डितराज डॉ० श्रीगोपालशास्त्री 'दर्शनकेशरी'

( काशी-पण्डित-सभाध्यक्षः, राष्ट्रपतिसम्मानितश्च )

सम्पादकौ—

श्रीगोपालदत्तपाण्डेयः

एम०, ए०, व्याकरणाचार्यः

( अवकाशप्राप्तः शिक्षोपनिदेशकः )

स्वामी श्रीप्रह्लादगिरिः

( उडीया स्वामी )

बोधगयामठ, वाराणसी



चौखम्बा सुरभारती प्रकाशन

वाराणसी

॥ श्रीः ॥

चौखम्बा सुरभारती ग्रन्थमाला
५९

# ऋजुपाणिनीयम्

( साङ्गम् )

संग्रहीता—

म० म० पण्डितराज डॉ० श्रीगोपालशास्त्री 'दर्शनकेशरी'

( काशी-पण्डित-सभाध्यक्षः, राष्ट्रपतिसम्मानितश्च )

सम्पादकौ—

श्रीगोपालदत्तपाण्डेयः
एम०, ए०, व्याकरणाचार्यः
( अवकाशप्राप्तः शिक्षोपनिदेशकः )

स्वामी श्रीप्रह्लादगिरिः
( उडीया स्वामी )
बोधगयामठ, वाराणसी



चौखम्बा सुरभारती प्रकाशन
वा रा ण सी

प्रकाशक—

चौखम्बा सुरभारती प्रकाशन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

के० ३७/११७, गोपालमन्दिर लेन

पोस्ट बाक्स नं० १२९

वाराणसी २२१००१



द्वितीय संस्करण १९८१

मूल्य ४-००

अन्य प्राप्तिस्थान—

चौखम्बा विद्याभवन

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

चौक ( बनारस स्टेट बैंक भवन के पीछे ),

पोस्ट बाक्स नं० ६९

वाराणसी २२१००१

मुद्रक—

श्रीजी मुद्रणालय

वाराणसी

# ज्योतिष्पीठस्य संक्षिप्तेतिहासः

वक्तारमासाद्य यमेव पूर्वं
सरस्वती स्वार्थ-समन्विताऽभूत् ।
निरस्त - दुस्तर्क - कलङ्कपङ्का
नमामि तं शङ्करमर्चिताङ्घ्रिम् ॥ १ ॥

द्वात्रिंशतोऽर्वाङ् निज-जीवनस्य
लीलाद्भुतस्याद्भुतकर्मठस्य ।
प्रातिष्ठिपद्यश्चतुरो मठाँस्तां
श्चतुर्दिशास्वध्यवसाय वीरः ॥ २ ॥

ज्योतिर्मठोऽयं दिशि चोत्तरस्यां
गोवर्द्धनाख्योऽपि च पूर्वभागे ।
शृङ्गेरिनामा दिशि दक्षिणस्यां
श्रीशारदाह्वो दिशि पश्चिमायाम् ॥ ३ ॥

चकार धर्मस्य स वैदिकस्य
प्रचारमेभ्यो विधमन् विपक्षान् ।
ज्योतिर्मठेऽस्मिन्निवसन्महात्मा
जग्रन्थ भाष्यं स हि शङ्करार्यः ॥ ४ ॥

वेदान्त - गीतोपनिषद्व्रजस्य
भाष्यत्रयीत्यस्ति जगत्प्रसिद्धिः ।
ज्योतिर्मठस्तेषु बभूव लुप्तः
कालप्रभावाद् विगतेऽब्दवृन्दे ॥ ५ ॥

प्रायः शरार्यब्जमितं हि वर्षं (१३५)
श्री-रावलः पूर्वतनोऽर्चको यः ।
प्रतिष्ठितष्टेहारराजतोऽसो
संरक्षकोऽभूत् किल मन्दिरस्य ॥ ६ ॥

पुनः परेशस्य कृपाकटाक्षा-
दाविर्विभूयाद्य पुरो विभाति ।
यत्राभवद् भारत-धर्म-संस्था-
संस्थापकः स्वामिवरोऽपि हेतुः ॥ ७ ॥

शुभ-प्रतिष्ठा-करणे मठस्य
श्रीशङ्कराचार्य-वरस्य चासौ ।
ज्योतिर्मठेभू-क्रयणादि सर्व-
प्राथम्य-कृत्यं विदधौ स सम्यक् ॥ ८ ॥

श्रीज्ञानानन्द-विज्ञ-प्रबलप्रयतनात् सर्वपीठाधिपास्ते
श्रीमन्तः शङ्कराय्यीः प्रददुरभिमतं पीठ-जीर्णोद्धृतौ स्वम् ।
तैर्विद्वद्भिश्च भूपैर्नियत-शुभ-दिने शङ्कराचार्य्यपीठे
काश्यां दत्ताभिषेकः प्रथितपृथुतपाः सम्प्रतिष्ठापितः सन् ॥ ९ ॥

श्रीब्रह्मानन्द-दण्डी समजनि विधितश्शङ्कराचार्य्य-वर्य्यः
यः स्वीयाश्चर्य्य-कारि-प्रबलतर-तपो-योगतो द्रव्यराशीन् ।
संगृह्याचीकरत्तां विहित-पृथुमठस्योद्धृतिं सूत्रतिञ्च
तस्यैवायं प्रभावः पुनरपि बदरीनाथ-देवस्य धाम्नि ॥ १० ॥

ज्योतिष्पीठं प्रवृद्धं हिमगिरि-शिखरे राजते विश्व-वन्द्यम्
तच्छिष्यः सर्वपूज्यस्तपसि पृथु-यशा धर्म-शास्त्रार्थ-वेत्ता ।
श्रीशान्तानन्द-दण्डी विबुध-गणनुतः शङ्कराचार्य्य आस्ते
स्वीयाचार्य्यानुगामी विधि-नियमयुतो धर्म-शिक्षां विधत्ते ॥ ११ ॥

इदानीं शङ्कराचार्यो दण्डी तेन प्रतिष्ठितः ।
श्रीविष्णुदेवानन्दोऽयं ज्योतिष्पीठे विराजते ॥ १२ ॥

तस्यैव वन्द्ये करकल्पवृत्ते
श्रीपाणिनीयाष्टक-शब्द-शास्त्रम् ।
संक्षिप्तरूपं समुपाहृतं सत्
सम्यक् प्ररोहेदृजुपाणिनीयम् ॥ १३ ॥

सर्वं सूत्र-समूहमत्र नियतं संरक्षितं यत्नतः—
श्छात्रैर्वृत्ति-विनिर्मितिः स्वयमहो कार्य्येति रीतिर्धृता ।
सूत्राणि प्रति-वासरं गुरुमुखाद्बुध्यद्भिराविंशति
वैशिष्टयं मुनिपाणिनेरभिमतं संदृश्यतामादरात् ॥ १४ ॥

प्रशस्ती रचिता स्तुत्या श्रीमद्गोपालशास्त्रिणा ।
शङ्कराचार्य्यपीठस्य श्रीमद्बदरिकाश्रमे ॥ १५ ॥



॥ श्रीकृष्णः शरणं मम ॥

# पाणिनि-पद्धति-माहात्म्यम्

गिरिजनि-गिरिशौ तौ प्रार्थ्य गोपालशास्त्री
द्रुतमिह सुरभाषोन्नीतिकामः समन्तात् ।
उपहरति बटुभ्यः पाणिनेः पद्धतिं यां
प्रसरतु भुवि शश्वत्सा महेशप्रसादात् ॥ १ ॥

सदाध्येया सर्वैर्निगमसदृशी पाणिनिमुने—
रहो अष्टाध्यायी झटिति पदबोध-प्रणयिनी ।
सुपूर्णा वैज्ञानी ध्रुवमतिशयाह्लादजननी
स्वयं स्वार्थं ब्रूते क्रम-नियम-पाठेन सुगमा ॥ २ ॥

वैज्ञानिकेन विधिना विविधैः प्रयत्नैः
पूर्णोपकार-मनसा मुनिना कृतो यः ।
सूत्रक्रमः स कमनीयतमोऽपि लोके
हा साम्प्रतं पठन-पाठनतो निरस्तः ॥ ३ ॥

तपस्यता पाणिनिना महात्मना
क्रमोपनद्धं बटुबुद्धिवर्द्धनम् ।
समर्पितं व्याकृतिरत्नमद्भुतं
बहूपकारि क्व नु हापितं बुधैः ॥ ४ ॥

वर्षवृन्दाद् विलुप्ता प्रथा पाठनात्
पाणिनीयाऽधुना प्रोद्धृता यत्नतः ।
पुण्यदा लाभदा मञ्जुला लाघवाद्
वृत्तिघोषश्रमालोपिकाऽऽलोक्यताम् ॥ ५ ॥

पाणिनेः पद्धतिर्माङ्गली सम्मता
वृद्धिरादैजये ! वृद्धिरादौ मता ।
तद्दिशा पाठका वृद्धिमासेवते
शीघ्रमेवार्ष-बुद्धिः सुधोर्जायते ॥ ६ ॥

प्रक्रमात्सूत्रपाठात्स्वयं पाठकः
सूत्रवृत्तिं विनिर्मात्यहो दृश्यताम् ।
आः सुमेधाकरी चाशुबोधाकरी
पाणिनेः पद्धतिर्हापिता हा ! कथम् ॥ ७ ॥

मेधाकृदुत्तमतमा पृथुकैः स्वधीता—
ऽष्टाध्यायिकाऽतिसरला श्रुतितुल्यसारा ।
वैज्ञानिकी क्रमपरा स्वयमर्थदा क्व
व्युत्क्रम्य सूत्रनिचयं क्व नु वृत्तिघोषः ॥ ८ ॥

हा हन्त पाणिनिमुनेः सरलप्रकारो
व्यावर्त्तितः कतिपयादिह वर्षतो यत् ।
भूत्वा ततोऽतिकठिनं किल शब्दशास्त्रम्
सर्वान् विभीषयति देवगिरोऽधिगन्तॄन् ॥ ९ ॥

यतो बिभ्यतः साम्प्रतं भारतीया
गिरोऽधीयते नादरेणामराणाम् ।
विलुप्तार्यमर्यादया सार्द्धमाद्या—
ऽप्यहो वेदविद्याऽथ सा विश्ववन्द्या ॥ १० ॥

आः क्रमः सूत्रराशेर्निबद्धोऽद्भुतो
येन सूत्रार्थ-वृत्तिः स्वयं सृज्यते ।
हा ! नवीनैर्बुधैस्तत्क्रमध्वंसतः
पाणिनेराशयस्यैव लोपः कृतः ॥ ११ ॥

त्वमेवया वृत्तिविदस्तु पाठका
वरं लभेरन्नपि पाणिनेर्मुनेः ।
व्यवस्थितत्वं प्रतिभाप्रवर्द्धनं
स्वतंत्रताद्यार्य-गुणोऽपि संचरेत् ॥ १२ ॥

समाजशास्त्रावगतिर्भवेदित—
स्तथेतिहासादि नयादि बुध्यते ।
न केवलेयं पद-सिद्धि-संहिता
द्विजत्व-सम्पादन-संचिकाद्भुता ॥ १३ ॥

काठिन्य-वृद्धिः क्रमसूत्रलोपान्
मेधाविलोपोऽपि च वृत्तिघोषात् ।
हा ! निष्क्रमा रीतिरभूतपूर्वा
महर्षिशिक्षोत्तम-सस्य-दूर्वा ॥ १४ ॥

महामुनिः स प्रतिभा-प्रवर्द्धिनीं
व्यरीरचद् यां क्रम-सूत्र-सन्ततिम् ।

अधीत्य तां बौद्ध-मुखा बुधाः पुरा
प्रयोग-सिद्धि व्यदधुस्तवाधृतिम् ॥ १५ ॥
नवीनमार्गप्रणया बुधा इमे
विहाय दिव्याष्टकघोषणं क्रमात् ।
प्रयोगसिद्धिप्रणयाश्च विन्दते
सूत्रक्रमोल्लङ्घनतो व्यतिक्रमम् ॥ १६ ॥
अधीत्य शीघ्रं मुनिमार्गतः पुरा
समेऽप्यभूवन् प्रवरा विपश्चितः ।
पदज्ञताऽजायत बाल्य एव चेत्
कथन्न जायेत बहुज्ञता ततः ॥ १७ ॥
कालिदासस्तथाऽन्ये बुधा ये पुरा
शङ्कराचार्यवर्योऽथ बाणादयः ।
पाणिनेः पद्धतिज्ञा अभूवन्निमे
सर्वतन्त्रस्वतन्त्रा महापण्डिताः ॥ १८ ॥
साम्प्रतं सा हि धारा निरुद्धा यतो
निष्क्रमाध्वप्रमग्नाः समे पण्डिताः ।
(१) अर्कवर्षैर्यदा व्याकृतिः श्रूयते
हा ! प्रवेशो भवेदन्यशास्त्रे कथम् ॥ १९ ॥

---

(१) पहले जन्मसे १२ बारह वर्ष पर व्याकरणका पाठ समाप्त होता था। अब पाठ प्रारम्भ करनेसे १२ वर्ष लगता है। यही बुद्धिका विपर्यास है। पाणिनि-जीके समयमें जन्मसे १२ बारहवें वर्षमें व्याकरण समाप्त करनेकी प्रथा थी। धातुपाठ तथा सूत्रपाठ बालकोंको शीघ्र कण्ठस्थ हो जाता था। समझ-शक्तिके उद्बुद्ध होनेपर सूत्रार्थ प्रयोगसिद्धि कराकर १२ बारह वर्षतक व्याकरणका ज्ञान कराकर विषयान्तर पढ़ाते थे। तभी तो द्वादशभिर्वर्षैः में **अपवर्गे तृतीया'** २।३।६ से फल प्राप्तिमें तृतीया है। यह मेरी कल्पना नहीं है। पं० अम्बिकादत्त व्यास इसका प्रत्यक्ष प्रमाण हैं। उन्होंने लिखा है कि मैंने अपने पितामहकी गोदमें बैठकर अष्टाध्यायी पढ़कर व्याकरण समाप्त कर काव्यादिके ज्ञानसे पूर्ण हो १७ वर्षकी अवस्थामें **'सामवतम्'** नाटक लिख रहा हूँ। यह **नाटक** कालिदासीय अभिज्ञान-शाकुन्तलसे बढ़कर है। ध्वन्यादि सभी गुणोंके अतिरिक्त इसमें श्लेषालङ्कार अधिक है।

जन्मतो द्वादशाब्दावधिर्व्याकृतेः पाठनं चाभवत् काल आधारितः ।
हा इदानीं बुधाः पाठकालादहो गण्यते द्वादशाब्दं विपर्यासितः ॥ २० ॥

भृगुणा सह पाणिनिर्मुनिर्द्विजवंशस्य बहूपकारकः ।
स निधिं भृगुसंहितामदात्स हि सूत्र-क्रममद्भुतं ददौ ॥ २१ ॥

सूत्रवृत्तिं स्वयं कुर्युरध्यायिनः
पाठनस्य प्रकारोऽयमासीन्मुनेः ।
तद्विहन्त्री पठन्प्राण-हर्त्री हृदा
पद्धतिर्वृत्ति-घोषाकरी हीयताम् ॥ २१ ॥

हार्दं निवेद्य विमलं प्रदिशामि विज्ञाः
यूयं स्वतन्त्रधिषणाः किल भारतीयाः ।
प्राणव्ययेन यदि पाणिनि-पद्धतिः सा
लोके चलेत् कुरुत तं प्रबलं प्रयत्नम् ॥ २२ ॥

या काऽपि माता जनकोऽथवेच्छतां
सुता सुतो मे भवतां सुमेधसौ ।
ताभ्यां प्रयत्नाच्चतुरब्दतो जनै—
र्घोष्यौ सुतावष्टकमेव केवलम् ॥ २३ ॥

संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च निषेधः सूत्रसप्तकम् ॥ २४ ॥

संज्ञा-सूत्रचयं चकार प्रथमेऽध्याये द्वितीये पुरः
संक्षेपात्स समास-सूत्र-निवहं पश्चाद्विभक्त्येकवत् ।
धातोः प्रत्ययमादधान्मुनिवरोऽध्याये तृतीये समम्
तुर्य्ये पञ्चमके च प्रत्ययविधिं शब्दाद् व्यधात् षष्ठके ॥ २५ ॥

द्वित्वं सांहितसौवरालुगमपि द्विष्ठं तथाङ्गं विधिं
षष्ठात् सप्तमगं पदाधिकृतिमष्टान्ते त्रिपादोविधिम् ।
यावन्मानव-मन्द-बुद्धि-रचितां तां निष्क्रमां पद्धतिं
हित्वा छात्रगणो न चैति सरलां तामार्षिकीं प्रक्रियाम् ॥ २६ ॥

तावन्नैव भवेत् प्रशस्त-सरणिः शब्दार्णवे सर्वथा,
हा ! त्यक्त्वाऽर्षसृतिं क्व गर्तपतिता छात्रावली साम्प्रम् ॥

निगमसदृशमेतत् पुण्यदं पाणिनीयम्
प्रियतमजनवृन्दं यत्नतः पाठनीयम् ।
फलमिह पदबोधे लाघवं साधनीयम्
द्विजकुलमपि मेधा-वर्द्धनं शिक्षणीयम् ॥ २७ ॥

सूत्रचतुष्टयम् सकारिकम् सर्वैर्ज्ञेयम्—व्यत्ययो बहुलम् ३।१।८५ ।

सुप्-तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।
व्यत्ययमिच्छति सूत्रकृदेषाम् सोऽपि च सिध्यति बाहुलकेन ॥

बहुलं छन्दसि ७।१।१०

सुपां सुलुक पूर्वसवर्णाच्छेयाडाड्याजालः ७।१।३९

आज्जसेरसुक् ७।१।५०

छन्दसि सर्वे विधयो विकल्पन्ते इति स्वीकृत्य सायणादिभिः कृता प्रतिपदम् व्याख्या । वस्तुतो मन्वादिभिः कृतो ग्रन्थात्मक एवार्थो वेदार्थः । इत्यलम् ।

श्रीगोपाल शास्त्री ( दर्शनकेशरी )
प्रधानाचार्य श्री वे० वे० वे० महाविद्यालय
जोशीमठ, ( चमोली )

# आमुख

संस्कृत-व्याकरणके क्षेत्रमें पाणिनि युगपुरुषके रूपमें आविर्भूत हुए। उन्होंने अतीतका संबल लेकर एक ऐसे व्याकरणकी रचना की जिसने तत्कालीन तथा भविष्यमें प्रयोग कीजानेवाली संस्कृत भाषाका मार्गदर्शन किया। इसके फलस्वरूप जनसाधारणकी दृष्टिमें पाणिनीय-व्याकरण ही संस्कृत-व्याकरण का पर्यायवाची शब्द बन गया। इसका एक मात्र कारण उनकी अष्टाध्यायी-की विशेषता थी, जिसे एक स्वरसे विश्वका सर्वाधिक प्रौढ एवं प्रामाणिक व्याकरण-ग्रन्थ स्वीकार किया गया। पाणिनिकी कई शताब्दियों बाद कात्यायन-ने वार्तिकोंकी रचना की। भाषाकी दृष्टिसे पाणिनिकी पकड़में जहाँ कहीं कुछ कमी रह गई थी, उन्हें कात्यायनने समेटते हुए अष्टाध्यायीके पूरकरूप वार्तिक-ग्रन्थ में प्रस्तुत किया। तदनन्तर इन दोनों आचार्योंकी कृतियोंमें सत्यान्वेषण कर शेषावतार पतञ्जलिने पाणिनि-सूत्रोंपर आधारित एवं कात्यायनके वार्तिकोंके ऊहापोहके साथ महाभाष्यकी रचना की। इन तीनों मुनियोंने व्याकरणको प्रौढताके शिखर पर पहुँचा दिया।

पाणिनिकी अष्टाध्यायीमें आठ अध्याय हैं। प्रत्येक अध्यायमें चार पाद (चरण) हैं। प्रत्येक चरणके सूत्रोंकी संख्या परस्पर भिन्न है। सम्पूर्ण अष्टाध्यायीमें लगभग ४००० सूत्र हैं। व्याकरणशास्त्र-सम्बन्धी प्रक्रियाके विचारसे 'अष्टाध्यायी'के तीन विभाग किए जा सकते हैं—(१) वाक्योंसे पदोंका संकलन (१–२ अध्याय), (२) पदोंका प्रकृति-प्रत्यय-विभाग (३–५ अध्याय) तथा (३) प्रकृति-प्रत्ययोंके साथ आदेश, आगम आदिका संयोजन कर परिनिष्ठित पदोंकी निष्पत्ति (६–८ अध्याय)। तदनुसार अष्टाध्यायीके प्रथम अध्यायमें संज्ञासूत्रोंका समावेश है। द्वितीयाध्यायमें दो पादों तक समास-सूत्र हैं, तृतीय पादमें कारक विभक्ति सूत्र हैं तथा

चतुर्थ पादमें एकवद्भाव, नपुंसकविधि, अन्वादेश, धात्वादेश एवं लुग्विधान वर्णित हैं। तृतीय अध्यायमें 'कृत्य' एवं 'कृत्' प्रत्ययोंका समावेश है। चतुर्थ तथा पञ्चम अध्यायोंमें तद्धित, स्त्रीप्रत्यय तथा समासान्त प्रत्ययोंका विवरण दिया गया है। छठे अध्यायमें तिङन्त, सन्धि तथा स्वरोंके सम्बन्ध-में नियम बतलाये गए हैं। सातवाँ अध्याय (सुबन्त और तिङन्त) अङ्गाधिकार नामसे प्रख्यात है। अन्तिम अष्टमाध्यायमें द्वित्व-विधान, स्वर-वैदिक-प्रक्रिया, सन्धि-प्रकरण, षत्व तथा णत्व-विधायक सूत्रोंका समावेश किया गया है। इस अध्यायके अन्तिम तीन पाद त्रिपादीके नामसे प्रसिद्ध हैं, जो पूर्व-वर्णित सवा सात अध्यायोंकी दृष्टिमें असिद्ध ( उपेक्षित ) माने जाते हैं। इनमें ऐसे ही विधान समाकलित किये गए हैं। अष्टाध्यायीके परिशिष्टके रूप-में धातुपाठ, गणपाठ, उणादिसूत्र, लिङ्गानुशासन तथा शिक्षासूत्र भी प्रसिद्ध हैं।

अष्टाध्यायी सूत्रोंके रूपमें विरचित होनेके कारण संक्षेपमें लिखी गई है। आरम्भसे ही उसके व्याडि, कुणि आदि अनेक व्याख्याता प्रसिद्ध हो चुके हैं। इन व्याख्याताओंको वृत्तिकार कहा गया है। वस्तुतः स्वयं पाणिनिने ही सर्वप्रथम अपने सूत्रोंको वृत्ति ( व्याख्या ) की होगी। जिसका अनुसरण कर यह परम्परा बराबर चली आरही है। सूत्रोंकी व्याख्याके मूलभूत सिद्धान्त तो पाणिनिके द्वारा ही प्रचलित हुए होंगे। वे मूलभूत सिद्धान्त उनकी अष्टाध्यायीमें स्वयं निहित हैं। उसका सूत्र-क्रम इस बातकी वैज्ञानिकताको स्वतः प्रकट करता है। इसी बातको अभिलक्षित कर अष्टाध्यायीका प्रकरण-विभाजन अपनी पूर्णताका द्योतक है। उस पूर्णताके अङ्ग हैं—पदच्छेद, समासविग्रह, पूर्वसूत्रानुवृत्ति, विभक्ति-विपरिणाम, वाक्ययोजना, आक्षेप एवं समाधान। आरम्भमें ही इन बातों पर ध्यान देनेसे छात्रोंको सूत्रार्थ समझने-में कठिनाई नहीं होगी। तदनन्तर वे वृत्तिग्रन्थोंका परिशीलन करें।

समग्र अष्टाध्यायीके प्रकरणोंको संक्षिप्त कर प्रस्तुत ग्रन्थ "ऋजुपाणिनी-यम्" की रचना की गई है। इसका उद्देश्य प्रारम्भिक छात्रोंको व्याकरणके

नियमोंसे परिचित कराना है और वह भी मौलिक रूपसे। संक्षेप करनेकी प्रक्रिया वस्तुतः बड़ी कठिन है। उसमें भी सूत्रोंकी काट-छाँट करना बड़ा दुरूह कार्य है। अतः इस ग्रन्थमें व्याकरणके प्रधान नियमोंका बोध करानेके लिए सूत्रपाठ-क्रमका निर्वाह कर उपयोगी सूत्रोंको समायोजित किया गया है। साथ ही इस बात पर विशेष ध्यान दिया गया है कि सूत्रार्थं समझनेके लिए प्रधान-सहायक अनुवृत्तिका नैरन्तर्य बना रहे तथा सभी मुख्य मुख्य विषय समाकलित हो जायँ। इस तरह इस ग्रन्थमें तद्विधायक लगभग १५०० सूत्र संकलित किये गए हैं। इस हेतु सुप्रसिद्ध विद्वान् म० म० डा० श्रीगोपालशास्त्री दर्शनकेशरीजीने संस्कृत सीखने वालोंके लिए प्रस्तुत ग्रन्थ **'ऋजुपाणिनीयम्'**-की रचना की है। इसे उपयोगमें लाना और इससे लाभ उठाना अध्येताओंका काम है। यह ग्रन्थ इस दृष्टिसे नहीं लिखा गया है कि अध्येता इसे पढ़ कर व्याकरणशास्त्रका प्रौढ पण्डित बनेगा, अपितु व्याकरणका पर्याप्त व्यावहारिक ज्ञान प्राप्त करानेके लिए इसकी रचना की गई है। यह अपने ढंगका एक सफल प्रयास है। आशा है अध्येता इसका समुचित स्वागत कर इससे लाभ उठायेंगे।

अक्षय-तृतीया<br>
बुधवासरः वि० सं० २०३८

—गोपालदत्त पाण्डेय

# सम्पादकीयम्

"पाणिनीयो नयो दुर्लभः साम्प्रतं
तत्प्रवक्ताऽप्यहो भाग्यतो लभ्यते ।
सूत्रवृत्तिः स्वयं पाठिभिश्चर्यते ( सृज्यते )
लोकवेदाश्रितः शब्दसिद्धिस्तथा ॥

अर्थ बहुत ही सरल है । आप लोग सब समझ सकते हैं । जैसे पाणिनिका नीति इस समय बहुत दुर्लभ हो गयी है, उस पद्धतिका जानकार भाग्यसे ही प्राप्त होता है । इस पद्धतिसे पढ़नेवाला स्वयं सूत्रवृत्ति बना लेता है और लौकिक और वैदिक दोनों प्रयोगोंको अनायास साध लेता है । इस पद्धतिको मैंने अनुभवसे तथा गुरुओंकी सहायतासे प्राप्त किया है । उसीको यहाँ यथाक्रम सजा दिया गया है । जिससे अध्ययनकर्त्ताको पर्याप्त व्याकरणका ज्ञान इस ग्रन्थ द्वारा हो जायगा । यदि छात्र पुस्तकमें निर्दिष्ट क्रमसे मनोयोग के साथ अध्ययन करेंगे तो मुझे आशा है कि इस व्याकरणके प्रवर्त्तक भगवान् शिव हमारे अध्येताओंका कल्याण करेंगे ।

स्वामी श्री प्रह्लाद गिरि
( उड़ियास्वामी जी ) बोधगयामठ
बैजनत्था ३७/३, कमच्छा, वाराणसी
( उ० प्र० )

सौर ४।१०।२०३६ वै०
( १७।१।१९८० ई० )

# प्रस्तावना

विश्वाभिवन्द्य, भारतीय संस्कृति एवं संस्कृतभाषाके संवर्द्धन, संरक्षण, सार्वभौम-प्रचारहिततत्पर, तदर्थं ही उत्सृष्ट-स्वार्थं, समर्पित-तन-मन-धन-प्राण, महामुनि, मदनमोहन मालवीयजीका गौरव आबालवृद्ध भारतीय जनताके हृदयको उद्बुद्ध एवं उल्लसित कर रहा है। उन्हींकी सदिच्छा एवं सत्प्रेरणाने पाणिनीय-शास्त्रका चमत्कार जनमनमें प्रविष्ट करानेके हेतु प्रौढों एवं कोमलमति छात्रोंके पथप्रदर्शक पाणिनीयशास्त्रोंके अत्यन्त उपयोगी भागोंको संगृहीतकर **'ऋजुपाणिनीयम्'** नामक ग्रन्थके निर्माणमें मुझे बद्धपरिकर किया। यह संग्रह मेरे प्राय: तीस चालीस वर्षोंके संस्कृत वाङ्मयके प्रौढ़ परिशीलन एवं छात्रों तथा विद्वानोंके निकट सम्पर्कसे प्राप्त अनुभवका ही अनुभाव है।

यह संग्रह बौद्धादि अवैदिकोंके प्रक्रियाग्रन्थोंके मूलघाती व्यर्थ विस्तारको हटा करके अल्पायास-साध्य संस्कृतभाषा-ज्ञानकी प्राप्तिमें तथा सांस्कृतभावना-की जागर्तिमें सहायक होगा ऐसी आशा है।

इसके द्वारा भोज, तथा गुप्त राजाओंके शासन कालमें जो प्राचीन व्याकरण वाङ्मयका स्वर्णिम प्रकाश था, वह फिर भी भारत धराधाम पर प्रकटित किया जा सकता है।

महर्षि पाणिनिका शब्दानुशासन केवल शब्दोंका प्रयोग ही नहीं शुद्ध बनाता बल्कि ऐतिहासिक, भौगोलिक, सांस्कृतिक साम्राज्यके गौरवपूर्ण आलोक-को भी उद्भासित करता है। हम जितने ही इस शास्त्रमें गंभीरतासे ग़ोते लगाते हैं उतने ही ज्ञानमौक्तिकोंसे अपनेको विभूषित पाते हैं।

मैं तो डिण्डिम-निनादमें ( डंकेकी चोट ) घोषित कर सकता हूँ—

> **"समाजशास्त्रावगतिर्भवेदित-**
> **स्तथेतिहासादि नयादि बुद्धचते।**
> **न केवलेयं पदसिद्धिसंहिता**
> **द्विजत्व - सम्पादन - सद्धिकाऽद्भुता ॥"**

अब मैं पाठकों ( छात्रों तथा अध्यापकों ) को अष्टाध्यायीक्रमके विशेषतया इस 'ऋजुपाणिनीयम्' के पठन-पाठनका संकेत कर रहा हूँ।

# पाठविधिः

प्राथमिक अथवा पूर्वमाध्यमिक कक्षाओंमें संस्कृतकी दुहितृभाषाओं ( हिन्दी, बंगाली, मराठी, गुजराती आदि ) के द्वारा अथवा हमारे **"पाणिनीय-प्रदीप"** नामक पुस्तकद्वारा वर्ण, पद, सन्धि, समास आदि व्युत्पत्ति-प्रक्रियाओंका ज्ञान प्राप्त करानेके बाद छात्र पाणिनीयके मूल सूत्रके संख्यानुक्रमसे स्वयं ही अर्थ करनेके अभ्यासी बनाये जा सकते हैं। ( यह बड़ा जरूरी है कि संस्कृत विश्वविद्यालय प्रारम्भिक कक्षाओंमें ही संस्कृत शुरू करावे। संस्कृतकी वर्ण-मालाकी भी पुस्तक तैयार कराई जाय(१)।

हमारे अग्रिम कतिपय श्लोक, सूत्रोंके अर्थ करनेकी रीति बतलाते हैं।

## सूत्रार्थ ( वृत्ति ) बनानेकी पाणिनि-पद्धति

**"सम्प्रघुष्य क्रमात्पाणिनीयाष्टकं**
**सन्धिबोधात्पदच्छेदतोऽर्थं चरेत्।**
**पूर्वसूत्रं परस्मिन् समासज्जय—**
**न्निर्विशेषां जहत्तद्विभक्तिं समाम् ॥ १ ॥**

**पूर्वसूत्रं परस्मिन्समासज्जदा**
**स्वाधिकारावधिं श्रृङ्खलावृद्धितः।**
**तत्समानं पदं स्वं जहद्धीतरत्**
**सर्वमेवोपहारीकरोत्यादरात् ॥ २ ॥**

**किन्तु तत्रापि चेद् यद्विशेष्यादिकं**
**तत्समानं पदञ्चापि याति स्वतः।**
**इत्थमाविष्करोत्यर्थमत्यद्भुतं**
**यो न जन्मान्ततः क्वापि विस्मर्यते ॥ ३ ॥**

**तत्परं पाणिनीय-प्रबोधं स्वयं**
**सम्पठन्नर्थबोधं हृदा धारयन्।**
**तद्बलेनानुवादादि कुर्वन् धिया**
**मासषट्केन शब्दार्णवं सन्तरेत् ॥ ४ ॥**

---

( १ ) जि० सारन ( छपरा ) के पं० आचार्य कपिलदेव शर्माने वर्णमाला-की पुस्तक छपवायी है। वह वैज्ञानिक है। वही सिखाई जाय। बाद 'ऋजु-पाणिनीयम्' रटाया जाय।

विमृश्य शास्त्रं विनिमथ्य हार्दं
ग्रन्थो निबद्धो वरदः 'प्रबोधः' ।
वैज्ञानिकः संस्कृतशिक्षणार्थं
मृदुः स्वयं छात्रगणैः सुपाठ्यः ॥ ५ ॥

छात्र पहले क्रमसे **पाणिनीयाष्टक** चाहे पूरी '**अष्टाध्यायी**' या उसका संक्षिप्त संस्करण '**ऋजुपाणिनीयम्**' याद कर लें। '**ऋजुपाणिनीयम्**' में दिये गये सन्धि, समास, तथा पदोंके प्रकार समझ लें। इन तीनोंमें सूत्रके अतिरिक्त कुछ भी दूसरी वस्तु रटनेको नहीं है। सब समझना ही है। बस, सूत्रोंकी सन्धि तोड़कर पदच्छेद करते हुए सूत्रोंका अर्थ करना है। हाँ पदच्छेद कर चुकने पर जितने पद सूत्रोंमें हों यदि उन्हीं पदोंसे पूरा अर्थ न हो जाता हो तो, उस सूत्रसे पूर्वसूत्रके असमान विभक्ति वाले पद अवश्य ही चले आते हैं और समान विभक्तिवाले पद नहीं आते। इसका ध्यान बराबर रखना पड़ता है, क्योंकि पूर्वसूत्र आगेके सूत्रोंमें अपने अधिकार तक जाता हुआ शृङ्खलावृद्धिसे आगेके सूत्रके समान विभक्तिवाले अपने पदको नहीं जाने देता, किन्तु असमान विभक्तिवाले सभी पदों को आगेके सूत्रमें बड़े आदरसे उपहार ( भेंट ) कर देता है। हां समान पदभी यदि विशेषण रहता है तब तो वह स्वयं उत्तर सूत्रमें चला ही जाता है, वह नहीं रुकता। यों पूर्वसूत्र उत्तर सूत्रोंका अर्थ जो अद्भुत रूपमें प्रगट करता है, वह जन्मभर भूलता नहीं है। इस प्रकार सूत्रार्थ कर चुकने पर '**पाणिनीयप्रबोध**' को अपने आप पढ़ता हुआ छात्र उसके अर्थोंको हृदयमें बैठाता जाय एवं उदाहरणोंका अर्थ भी अध्यापकोंसे पूछ-पूछकर समझता जाय तो व्याकरणका पर्याप्त ज्ञान हो जाता है। बाद उसी व्याकरण ज्ञानके बलपर अनुवाद करता जाय। यों साहित्य ग्रन्थ हितोपदेश आदिको पढ़कर छह मासमें ही शब्दसागर पार कर जाता है। इसी दृष्टिसे सभी शास्त्रोंका विचार करके पाणिनिके हृदयस्थित संकल्प द्वारा प्रमाणित यह 'वैज्ञानिक' पद्धतिका 'वरद' ग्रन्थ '**पाणिनीयप्रबोध**' लिखा गया है, जो बहुत ही सरल एवं छात्रों द्वारा स्वयं पढ़ने योग्य है।

अधिकार या अनुवृत्तिसे आये पदोंको सूत्रके पदोंके साथ सिलसिलेवार ( अन्वय करके ) बैठाकर क्रियाओंमें 'स्यात्' 'भवेत्' 'भवति' इत्यादि अन्तमें लगाकर वृत्ति बना ली जाती है। अपने आप बनायी हुई इस वृत्तिको चाहे समझकर ही मनमें बैठा लें या दो चार बार रट लें। जैसे भी इसका दृढ़

संस्कार मन पर बैठ जाय वैसा छात्रोंको कर लेना चाहिये। इस प्रकार पाणिनीय व्याकरण सरलताके साथ पढ़नेसे छात्रकी मेधाशक्ति जो बढ़ती है, वह महर्षि पाणिनिकी विलक्षण देन है, जिसे स्वतन्त्र भारतमें प्रदीप्त करना सभी मनीषियों-का कर्त्तव्य है। उदाहरणार्थ सूत्रार्थ ( वृत्ति ) जैसे[1]—

**वर्त्तमाने लट्** ३।२।१२३। पदच्छेद—वर्त्तमाने ७।१, लट् १।१ ( इति पद-द्वयात्मकं सूत्रम् )। इसमें ऊपरसे **प्रत्ययः** ३।१।१ **परश्च** ३।१।२ ( पञ्चमाध्याय तक अधिकार ) ये दोनों अधिकारसूत्र आ जाते हैं। तीसरा **धातोः** ३।१।९१ ( तृतीयाध्यायतक अधिकार है ) यह सूत्र आता है। इन सूत्रोंके सभी पदोंको सिलसिलेवार ( अन्वय करके ) बैठाकर वृत्ति बनती है—**वर्त्तमाने धातोः परः लट् प्रत्ययः ( भवति )**। इसकी हिन्दी स्वयं छात्रको अपने आप विभक्तियोंके अर्थानुसार कर लेनी होगी—'वर्त्तमान ( काल ) में धातुसे परे लट् प्रत्यय होता है'। ( हिन्दी करनेमें पञ्चमी, सप्तमी, षष्ठी, प्रथमा यही क्रम है। जहाँ जितने भी शब्द हों, उनको इसी क्रमसे बैठाना है। ( पूर्वत्र पञ्चमी परत्र सप्तमी षष्ठीं प्रकल्पयति। )

सूत्रमें जिस विभक्तिवाला पद होता है, उस विभक्तिवाला पद ऊपरके सूत्रसे नहीं आता जैसे—**क्ङिति** १।१।५ यह सप्तम्यन्त पद है, अतः यहाँ **'न धातुलोप आर्धधातुके'** १।१।४ से केवल **'न'** और **इको गुणवृद्धी** १।१।३ यह पूरा सूत्र आजाता है। तब वृत्ति बन जाती है—**'क्ङिति च न इको गुणवृद्धी भवतः'**। **'अस्ति' 'भवति'** क्रिया तो जहाँ कोई क्रिया न रहे वहाँ लगा दी जाती है। यह तो सर्वसाधारण प्रसिद्धि है ही।

यों ही जहाँ बिना सम्बन्धविशेषकी षष्ठी विभक्ति होती है वहाँ षष्ठीके आगे **'स्थाने'** यह पद जोड़कर वृत्ति बना ली जाती है। जैसे—**'इको यणचि'** ६।१।७७ इस सूत्रमें **'इकः'** षष्ठी किसी सम्बन्धविशेषमें नहीं है, अतः उसके आगे **'स्थाने'** जोड़कर **'इकः स्थाने'** ऐसा अर्थ करते हैं और **संहितायाम्** ६।१।७२ का अधिकार आरहा है तो अर्थ होता है—**अचि परे संहितायाम्**

---

१. लघुकौमुदीके संज्ञा प्रकरणमें ( सूत्रेषु अदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ) लिखा तो है। पर **'अष्टाध्यायी'** 'या' **'ऋजु-पाणिनीयम्'** न जाननेसे न अध्यापक ही यह कार्य कर सकता है और न छात्र। अतः अपनी भलाई चाहनेवाले छात्र कमसे कम **'ऋजुपाणिनीयम्'** रटकर ही वृत्ति बनावें। वृत्ति रटना तो महापाप है।

इकः स्थाने यण् भवति । यों ही **एचोऽयवायावः** ६।१।७८—यह सूत्र **इको यणचि** ६।१।७७ के बाद आता है तो इसमें षष्ठ्यन्त और प्रथमान्त पद रहनेके कारण '**इकः**' और '**यण्**' नहीं आवेंगे किन्तु केवल '**अचि**' सप्तम्यन्त पद ही आवेगा और इसकी '**एचः**' षष्ठीके आगे स्थाने लग जायगा और **संहितायाम्** ६।१।७२ का अधिकार ६।१।१५८ तक चल ही रहा है, तो इस सूत्रकी वृत्ति बन जायगी—**अचि संहितायाम् एचः स्थाने अयवायावः भवन्ति।** यों ही इस प्रकारके सूत्रकी वृत्ति अपने आप बनती जायगी। इसके लिये पाणिनिजीने **षष्ठी स्थाने योगा** १।१।४९ यह परिभाषासूत्र वृत्तिबनानेवाला स्वयं लिख दिया है।

यों ही जहाँ '**गुणः**' '**वृद्धिः**', ऐसे शब्द हों, चाहे वे सूत्रोंमें हों या ऊपरके सूत्रसे आये हों, वहाँ '**इकः**' षष्ठ्यन्त पद आकर अन्य नियमोंके अनुसार मिलकर अर्थ कराता है, जैसे—**सार्वधातुकार्धधातुकयोः** ७।३।८४ में '**अङ्गस्य**' ६।४।१ का अधिकार आनेके कारण **मिदेर्गुणः** ७।३।८२ से '**गुणः**' आता है तब '**गुणः**' के आनेपर '**इकः**' यह षष्ठ्यन्तपद आ जाता है। बाद '**इकः**' इस विशेषणमें अन्त लग जानेसे '**सार्वधातुकार्द्धधातुकयोः परयोः इगन्तस्य अङ्गस्य गुणः भवति**' वृत्ति बन जाती है। इसका सूत्र है **इको गुणवृद्धी** १।१।३।

यों ही जहाँ '**ह्रस्व**' '**दीर्घ**' '**प्लुत**' शब्द पढ़ा रहे या ऊपरसे आता हो वहां '**अचः**' यह षष्ठ्यन्तपद जुट जाता है। जैसे—'**ह्रस्वः** ७।४।५९' सूत्र है। इसमें **अत्र लोपोऽभ्यासस्य** ७।४।५८ से '**अभ्यासस्य**' आता है। बाद इसमें '**ह्रस्व**' शब्दके कारण '**अचः**' षष्ठ्यन्तपद आजाता है तो वृत्ति बनती है '**अभ्यासस्य अचः ह्रस्वो भवति**'। इसका सूत्र है—**अचश्च** १।२।२८।

यों ही सप्तमीको छोड़कर पञ्चमी षष्ठी प्रभृति विभक्तिवाले विशेषणोंमें '**अन्त**' शब्द लगाकर उसी विभक्तिवाला उसे बना लेते हैं और सप्तमी विभक्तिवालेमें आदि लगाकर जैसेका तैसा सप्तमी विभक्तिमें रहने देते हैं। जैसे—**सुपि च** ७।३।१०२ इस सूत्रमें **अङ्गस्य** ६।४।१ का अधिकार आता है और **अतो दीर्घो यञि** ७।३।१०१ सम्पूर्ण सूत्र आजाता है तो '**यञि सुपि अतोऽङ्गस्य दीर्घः**' ऐसा पदोंका क्रम बैठता है। यहां '**अतः**' षष्ठी विभक्ति वाला विशेषण है और '**यञि**' सप्तमी वाला तो उधर '**अन्त**' लगा, इधर '**आदि**' लगा दोनों जगह अपनी विभक्ति बनी रही तो वृत्ति इस तरह बन गयी—**यञादौ सुपि अदन्तस्य**

**अङ्गस्य दीर्घः ( भवति )**। इसके लिए क्रमशः नियम है—**येन विधिस्तदन्तस्य** १।१।७२ और **यस्मिन् विधिस्तदादावल्ग्रहणे** ( परिभाषा )।

**नामि** ६।४।३ सूत्रमें **ढ्रलोपे पूर्वस्य दीर्घोऽणः** ६।३।१११ से **'दीर्घ'** आता है। इसलिये यहाँ **'अचः'** यह षष्ठयन्तपद उपस्थित हो जाता है। बाद **'अङ्गस्य'** अधिकार आनेसे **'अचः'** विशेषण हो जाता है तो उसमें **'अन्त'** शब्द लग जानेसे **'नामि परे अजन्तस्य अङ्गस्य दीर्घः ( भवति )'** यह वृत्ति बन जाती है। इसका सूत्र **अचश्च** १।२।२८ है इसमें **ऊकालोऽज्झस्व-दीर्घ-प्लुतः** १।२।२७ से **'ह्रस्वदीर्घप्लुतः'** आकर अर्थ करा देता है कि जहाँ भी ह्रस्वदीर्घ-प्लुत पड़ा हो वहाँ **'अचः'** षष्ठयन्तपद उपस्थित हो जाता है।

इसी प्रकार पर, नित्य, अन्तरङ्ग, अपवाद, असिद्ध इत्यादि परिभाषाओंका ज्ञान भी इस व्याकरणमें अत्यावश्यक है। अष्टाध्यायी पाठमें जो सूत्र पूर्वसे बादमें पढ़ा रहेगा वह पूर्वसूत्रकी अपेक्षा सवासात अध्यायतक बली होता है। इसका सूत्र है **विप्रतिषेधे परं कार्य्यम्** १।४।२। यों ही पर, नित्य, अन्तरङ्ग, अपवादोंमें परसे नित्य बली, पर नित्यसे अन्तरङ्ग बली, पर, नित्य और अन्तरङ्गसे अपवाद बली होता चलता है। कहा भी है कि **'पर-नित्यान्तरङ्गापवादाना-मुत्तरोत्तरं बलीयः। ( कृताकृतप्रसङ्गी विधिर्नित्यः। अल्पापेक्षकमन्तर-ङ्गम्। बह्वपेक्षकं बहिरङ्गम्। निरवकाशो विधिरपवादः। प्राप्तौ सत्यां विधिर्नियमः स्यात्। )**

ऐसा ही सूत्र है **'पूर्वत्रासिद्धम्'** ८।२।१। यह ८ वें अध्यायके द्वितीयपादका पहला सूत्र है। इसका अर्थ है कि पूर्वमें अर्थात् सात अध्याय और आठवें अध्याय-के पहले पादके सूत्रोंमें आठवें अध्यायके दूसरे तीसरे और चौथे पादके सूत्र असिद्ध हैं। जब यह सूत्र ८।२।१ आठवें अध्याय दूसरे पादका पहला सूत्र होकर परि-भाषासूत्र रहता है, तब यह अर्थ होता है। जब यह सूत्र अधिकार हो जाता है तब आगेके सूत्रोंमें बैठ जाता है और वहाँ बैठा अर्थ करता है कि तुम पूर्वत्र ( पूर्व सूत्रोंमें ) असिद्ध हो अर्थात् आठवें अध्यायके तीन पादके सूत्रोंमें भी पूर्व पूर्वके सूत्रोंमें परके सूत्र असिद्ध हैं। जैसे—हर इह। हरे इह–यहाँ **एचोऽय-वायावः** ६।१।७८ लगकर **'ए'** को **'अय्'** कर, हरय् इह बनाया। तब **लोपः शाकल्यस्य** ८।३।१९ ने **'य्'** का लोप कर दिया, हर-इह बन गया। यहाँ पर **आद् गुणः** ६।१।८७ की प्रवृत्ति होने लगी तो **'पूर्वत्रासिद्धम्'** ८।२।१ के कहने से **लोपः शाकल्यस्य** ८।३।१९ **आद् गुणः** ६।१।८७ की दृष्टिमें असिद्ध हो गया। अर्थात् **'य्'** का लोप वहाँ है ही नहीं, वहाँ **'य्'** ही पड़ा है तो **'अ+इ'**

नहीं है अ + यि रहा, तब **'आद् गुणः'** की प्रवृत्ति ही नहीं हो सकती। इस प्रकार लगे सूत्रोंको भी यह असिद्ध करके प्रयोग सिद्ध कराता है। इत्यादि बातोंकी जानकारी पाणिनीय व्याकरण पढ़ने वालोंको अवश्य करना ही चाहिये। सबसे आवश्यक पाणिनीय व्याकरणमें सूत्रोंका क्रमसे पढ़ना है। सूत्रोंको क्रमसे पढ़नेमें ही सरलता, मेधावर्द्धकता प्रभृति अनेक अवर्णनीय गुण प्राप्त हो सकते हैं। यही तो इसका विज्ञान है।

पाणिनीयो नयो दुर्लभः साम्प्रतं, तत्प्रवक्ताप्यहो भाग्यतो लभ्यते।
सूत्रवृत्तिः स्वयं पाठिभिश्चर्यते, लोकवेदाद्धितश्शब्दसिद्धिस्तथा॥

## सूत्रोंके प्रकार भेद

**संज्ञा च परिभाषा च विधिर्नियम एव च।**
**अतिदेशोऽधिकारश्च निषेधश्चेति सप्तकम्॥**

ये ही सात प्रकारके सूत्र हैं। संज्ञा-सूत्र प्रायः प्रथमाध्यायमें ही हैं। जिन सूत्रोंमें प्रायः प्रथमान्त ही पद हों उन्हें ही संज्ञा-परिभाषा सूत्र समझें। विधिसूत्र अधिक हैं, जो कार्य्यका विधान करते हैं। जैसे '**इको यणचि** ६।१।७७।' निषेध तो स्पष्ट ही है। नियम सूत्र अध्यापकसे ही समझना होगा। ( **प्र मौ सत्यां विधिर्नियमाय कल्पते**' यही उसका लक्षण है। ) अधिकार सूत्रोंको या पदोंको बतानेके लिये तो पाणिनिजीने **स्वरितेनाधिकारः** १।३।११ सूत्र ही लिखा है। इसके अनुसार जिस पद या सूत्रपर स्वरित—कालापाइका चिह्न लगा हो उसीको अधिकृत समझो। यहाँ अधिकार सूत्रों या अनुवृत्त पदोंको मोटे अक्षरोंमें छापा गया हैं। अनुवृत्तिकी अवधि अङ्कोंमें सूत्रके सामने दाहिनी ओर मुद्रित है। जहाँ कई पद भिन्न-भिन्न स्थलों तक जाते हैं। वहाँ अवधिकी संख्याके बीचमें अल्प विराम दिया गया है। यह संकेत छात्रों तथा अध्यापकोंकी बड़ी सहायता करेगा।

अन्तमें पाणिनीय व्याकरण-प्रवर्त्तक भगवान् भूतभावनका स्मरण करता हुआ छात्रों तथा अध्यापकोंसे आशा करता हूँ कि, वे समुचित लाभ उठाकर मेरे प्रयासकी सफलतामें सहायक सिद्ध होंगे। इत्यलम्। शिवम्।

## पाणिनि-पद्धति

पाणिनीय पद्धति अर्थात्—१. धातुपाठ, २. सूत्रपाठ, ३. गणपाठ-वार्त्तिक-पाठ, ४. उणादिसूत्र-पाठ तथा ५. लिङ्गानुशासन आदिके द्वारा अध्ययनाध्यापन प्रणाली। इनके अन्य सहायक भी हैं। उनका ज्ञान भी आवश्यक है। वे ये हैं—

( १ ) **पाणिनीय शिक्षा द्वारा वर्णोच्चारण** ( स्थान, यत्न, प्रयत्न, प्राण इत्यादिका ज्ञान ) ( २ ) **माहेश्वर सूत्र** तथा 'तिप्तस्झि० ३।४।७८ स्वौजसमौट्० ४।१।२' सूत्रों द्वारा वर्णित जो तिङ्-सुप् प्रत्याहार संज्ञाओंके मूल हैं ( ३ ) **परिभाषा पाठ** ( ४ ) **अनुबन्ध** ( अर्थात् इत्संज्ञक वर्ण ) ( ५ ) **सूत्रोंकी संख्याका ज्ञान।** ( संज्ञा सूत्रोंका मर्म भी अध्यायी तथा अध्यापकके मस्तिष्कमें रहना अत्यावश्यक है। )

पाणिनिके कालमें तथा उनके शिष्योंकी परम्पराओंमें आज जैसी परिस्थितियां नहीं थी। अध्यापकमण्डल अपने कर्त्तव्यमें जागरूक एवं निष्ठावान् था। प्राक्तन-शास्त्रों परही नूतन रङ्ग चढ़ाकर उसे अपना बना लेता था। पाणिनीयाष्टाध्यायी पाणिनि-प्रोक्त शास्त्र है। प्रत्याहारसूत्र तथा अन्यान्य बहुतसे सूत्र उनसे भी प्राचीन हैं।

संक्षेपसे ही मैं यहाँ इनका दिग्दर्शन मात्र कर रहा हूँ। मेरा निवेदन यही है कि विद्वन्मण्डल स्वयं मनन एवं अवधानतया अपनी बुद्धि एवं अपने ज्ञानका सदुपयोग उदारतासे करने लगे तो समस्याको हल करनेमें कोई कठिनाई नहीं है। स्वतन्त्र भारतके वातावरणमें आज सर्वोत्कर्षके लिए स्वतंत्र कुञ्जिका पाणिनीय-पद्धति संस्कृतशिक्षाके साथ ही समाजशास्त्रके सम्पूर्ण ज्ञान प्राप्ति करानेमें भी अति सहायिका सिद्ध होगी। तब मनुकी यह अग्रिम उक्ति भी चरितार्थ होने लगेगी—

"एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥"

इस विषयमें मेरे "**पाणिनीयप्रशस्तिनाटकम्**" ( जो चौखम्बाविद्याभवन सुरभारती प्रकाशनसे प्राप्य है। ) के इस श्लोकका अवलोकन करें—

"युगे पारतन्त्र्यप्रधाने प्रहातो—
ऽन्धकारावृते तत्तपोऽज्ञैर्नवीनैः।
स्वतन्त्रो मुनि. पाणिनिः पूजनीयः
स्वतन्त्रे युगे भारतीयैः स्वतन्त्रैः॥"

इस पद्यके आलोकमें आवश्यक विषयोंका संक्षिप्त परिचय दिया जा रहा है—

( १ ) **पाणिनीय धातुपाठ** नामसे जो पृथक् पुस्तक मुद्रित है, वही संक्षिप्त धातुपाठ नामसे दिया जा रहा है। उसे कण्ठ करना चाहिए। वही

पाणिनिपद्धतिका मूल स्रोत है। उसीसे १० लकारों वा तिबादिप्रत्ययोंको लगाकर आख्यात ( तिङन्त ) पद तथा **धातोः** ३।१।९१ सूत्रके आगेके सूत्रोंसे कृत्प्रत्यय लगाकर कृदन्त शब्दोंका सर्जन होता है।

( २ ) **अष्टाध्यायी शब्दानुशासन** पाणिनीयाष्टक, पाणिनीयाष्टाध्यायी इत्यादि नामोंसे प्रसिद्ध पाणिनि मुनिके सूत्रोंका संक्षिप्त संग्रह **'ऋजुपाणिनीयम्'** के नामसे मुद्रित है।

सूत्रोंके आठ अध्याय, प्रत्येक अध्यायके चार पाद, प्रत्येक पादमें ११५ के अनुपातसे चार कम चार हजार ( ३९९६ ) सूत्र अष्टाध्यायीके होते हैं। उसीका संक्षिप्त संस्करण यह **'ऋजुपाणिनीयम्'** है। इसमें १५०० पन्द्रह सौके करीब सूत्र हैं।

( ३ ) **गणरत्नमहोदधि** नामसे गणपाठकी पुस्तक अब अप्राप्य है। यहाँ संक्षिप्त गणपाठ दिया गया है।

( ४ ) **वार्तिकपाठ** यह अब पृथक् उपलब्ध नहीं है, जो कि सूत्रोंका पूरक है।

"उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्त्तते।
तच्छास्त्रं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः॥"

कात्यायनके केवल ४३६३ वार्तिकोंका संग्रह **'वररुचि श्रुतधर'** (कात्यायन) नामसे पहले था। अब तो सूत्रोंके साथ ही कहीं-कहीं मुद्रित हैं। यहाँ ऋजु वार्तिकपाठ संक्षिप्त दिया गया है।

( ५ ) **लिङ्गानुशासन** तथा शाकटायनके **उणादिसूत्र** भी कुछ कुछ आदर्श रूपसे यहां दिये जारहे हैं।

( ६ ) **पाणिनीय शिक्षाका** स्थान-प्रयत्नादि-निर्देशक स्थल भी संक्षिप्त प्रकारसे यहाँ दिया जा रहा है।

( ७ ) **ऋजुपाणिनीयम्**के आरम्भमें ही 'प्रत्याहारसूत्राणि' संकेत द्वारा माहेश्वर सूत्रभी मुद्रित हैं।

( ८ ) **परिभाषेन्दुशेखर** नामका परिभाषा पाठका बृहद् ग्रन्थ प्रसिद्ध ही है। यहाँ आवश्यक परिभाषाओंका संग्रह हम दे रहे हैं। **'परिभाषा-संग्रह'** नामसे पृथक् ही एक लघुकाय पुस्तिका भी मुद्रित उपलब्ध होती है।

( ९ ) **शिक्षानुबन्धाः** शीर्षकमें इत्संज्ञक सूत्रों तथा अनुबन्धोंका ज्ञान करा दिया जा रहा है।

( १० ) सूत्रोंके सप्तविध भेदके साथ अधिकार सूत्रोंका ज्ञान करा ही दिया गया है।

( ११ ) **'महती'** संज्ञा अन्वर्थ होती है। लघु संज्ञाओंके लिए **तरप्तमपौ घः** १।१।२२ **दाधाध्वदाप्** १।१।२० इत्यादि पाणिनीय सूत्र हैं।

पाणिनीय व्याकरणमें सूत्रोंका पूर्वापरीभावज्ञान, उत्सर्गापवादज्ञान और इसके साथ ही साथ समाजशास्त्रका भी ज्ञान आवश्यक है। उसका भी हमने यहाँ संक्षिप्त परिचय दिया है। सबसे बड़ी विशेषता यह है कि "परनित्यान्तरङ्गाप-वादानामुत्तरोत्तरं बलीयः" इस परिभाषाका अर्थज्ञान ठीक होना चाहिये। **'पर'** वहीकहलाता है जो बादका सूत्र है। **"कृताकृतप्रसङ्गो विधिर्नित्यः"** जो किसी सूत्रके लगनेसे पहले भी लग सके तथा बादमें लग सके वही नित्य कहलाता है। **"अल्पापेक्षकम् अन्तरङ्गम्" "बह्वपेक्षकम् बहिरङ्गम्"**। जो थोड़ेकी अपेक्षा करे वह अन्तरङ्ग है। जो बहुत चाहे वह बहिरङ्ग है। जिसमें कोई निमित्त न हो वह भी अन्तरङ्ग है, जिसमें कोई निमित्त हो वह बहिरङ्ग है। **"निरवकाशो विधिरपवादः"** जिसे लगानेका मौका ही न मिले वह अपवाद कहलाता है। यहाँ तो बड़ा विस्तार हो जायेगा, अतः विद्वान् अध्यापक इस परिभाषाको खूब स्पष्ट कर दें। इसी परिभाषासे पाणिनिजी शतरंग क्रीड़ा कराकर सूत्रों द्वारा प्रयोगोंको सधवाते रहे और अपने समाजशास्त्रको भी पढ़ाते रहे।

## कृतज्ञता-प्रकाश

यहाँ मैं अपने परमाराध्य गुरुदेव स्वर्गीय पं० अनन्तरामशास्त्रीजी व्याकरण-केशरीका स्मरण सर्वप्रथम करता हूँ, जिनकी कृपासे मैं व्याकरणका इतना ज्ञान प्राप्त कर सका हूँ कि आज पाणिनीय शब्दशास्त्रके वैज्ञानिक ऋजुतम मार्गको छात्रों तथा अध्यापकोंके समक्ष उपस्थित कर रहा हूँ। इस पुस्तकके छात्रोपयोगी संस्करणको उपयोगी बनानेमें बोधगयामठके स्वामी प्रह्लाद गिरि महाराजजीने सम्पादन द्वारा जो अथक परिश्रम किया है उसके लिए मैं सदा ऋणी रहूँगा। साथ ही श्रीगोपालदत्त पाण्डेयको भी धन्यवाद है जिन्होंने परिष्कारयुत सम्पादन-कार्यमें पूरा सहयोग दिया है। अन्तमें अब 'तेरी **'ऋजुपाणिनीयम्'** पद्धति ही चलेगी"—ऐसा वर देनेवाले, हमारे ज्ञानके गुरु, हमें पशुसे पशुपति बनानेवाले साक्षात् शिव **म० म० आचार्य श्री रामेश्वर झा जी** को कृतज्ञता प्रकाश करता हूँ कि उन्होंने अपने नाम पर समर्पण करनेकी आज्ञा दी है—

"काश्यां कारुणिकः शिवो धृततनुः प्राचार्य रामेश्वरो
झोपाह्वो विबुधो विराजति गुरुः सर्वान् दधत् स्वं पदम् ।
तस्मै श्रीत्रिमुनि-त्रिमङ्गलमिदं सच्छब्दशास्त्रं त्वृजु
संक्षिप्ताष्टकमर्पितं विजयतां सूत्रार्थकृच्छाश्वतम् ॥

अपि च—

यः पूर्वं स्वशुभाशिषासिचदिति 'त्वद्-ग्रन्थ एधिष्यते'
झोपाह्वो गुरुवर्य-भक्तवशगः साक्षाच्छिवः सर्वदः ।
तस्मै तन्मृदु पुस्तकं विजयतां श्रद्धापरागान्वितं
पुष्पं पाणिनि-पुष्कराद् पहृतं गोपालजीशास्त्रिणा ॥

सौर ४।१०।२०३६ वै० }
( १७।१।८० ई० ) }

श्री गोपालजी ( शिवः )[1]

---

( १ ) 'गोपालजी' इति नामोच्चारणं तु ऋजुपाणिनीयसंग्रहीतुर्ज्येष्ठभ्राता शिवकुमारशास्त्री जन्मकाले एव सर्वेषां पुरस्तात् स्वयमबुद्ध एवोच्चैर्जगाद—मद्गेहे गोपालजी आगतः इति । ततः प्रभृति तदेव नामास्य रूढमस्ति गोपालजी । अग्रे च शास्त्रीति योगेन डा० श्रीगोपालशास्त्री दर्शनकेशरीति प्रसिद्धिरधुना ।

॥ श्रीः ॥

# ऋजुपाणिनीयम्

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं[1] तस्मै पाणिनये नमः ॥ १ ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥ २ ॥
वाक्यकारं वररुचिम् भाष्यकारम् पतञ्जलिम् ।
पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ॥ ३ ॥
प्राप्य विश्वजनीनाज्ञां मालवीय-महामुनेः ।
अष्टकं तत्समाक्षिप्य पाणिनीयमृजु ब्रुवे ॥ ४ ॥
ऋजुं पठन् पदच्छेदं कुर्वन् सन्धिसमासतः ।
अनुवृत्त्यादि-सूत्रार्थं विदधत्सुरगीः-पटुः ॥ ५ ॥

## माहेश्वर-प्रत्याहार-सूत्राणि[2]

१ अइउण् । २ ऋऌक् । ३ एओङ् । ४ ऐऔच् । ५ हयवरट् । ६ लण् । ७ ञमङणनम् । ८ झभञ् । ९ घढधष् । १० जबगडदश् । ११ खफछठथचटतव् । १२ कपय् । १३ शषसर् । १४ हल् । इति माहेश्वर-प्रत्याहार-सूत्राणि । ( अइउऋऌ एओ, ऐऔ, हयवरल, ञमङणन, झभघढध जबगडद, खफछठथ, चटतकप, शषसह, अल्प्रत्याहारवत् 'अहम्' प्रत्याहारोऽपि गुरुभ्यो ज्ञेयः, यत्र सर्वं विश्वं समन्वेति । )

---

१ पाणिनीयं व्याकरणं तत्प्रोक्तमेवास्ति, न तु तत्कृतमिति निश्चप्रचम् । आर्य-समाजिनस्तु भ्रान्ताः ।

२ नृत्तावसाने नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्तु-कामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥
चतुःसहस्री सूत्राणां पञ्च-सूत्र-विवर्जिता ( ३९९५ ) । अष्टाध्यायी पाणिनीया सूत्रैर्माहेश्वरैः सह ॥ ( स्वरसिद्धान्तचन्द्रिका श्लो० १५ ) । प्रत्याहारसूत्राण्यपि पाणिनेरेवेति भ्रान्तधारणा आर्यसमाजिनः ।

# अथ शब्दानुशासनम्*

## प्रथमाध्यायस्य प्रथमः पादः

१ **वृद्धिरादैच्** ३

२ अदेङ्गुणः ३

३ **इको गुण-वृद्धी** ६

४ न धातु-लोप आर्ध-धातुके ६

५ क्ङिति च

६ दीधी-वेवीटाम् ( इति गुणवृद्धि-प्रकरणम् )

७ हलोऽनन्तराः संयोगः

८ मुख-नासिका-वचनोऽनुनासिकः

९ तुल्यास्य-प्रयत्नं **सवर्णम्** १०

(वा०) ऋ-लृ-वर्णयोर्मिथः सावर्ण्यं वाच्यम्

१० नाज्झलौ

११ **ईदूदेद्** द्विवचनं **प्रगृह्यम्** १२,१९

१२ अदसो मात्

१४ **निपात** एकाजनाङ् १५

१५ **ओत्** ( इति प्रगृह्यम् ) १६

२० दाधा घ्वदाप्

२१ आद्यन्तवदेकस्मिन्

२२ तरप्-तमपौ घः

२३ बहु-गण-वतु-डति **संख्या** २५

२४ ष्णान्ता **षट्** २५

२५ डति च

२६ क्त-क्तवतू निष्ठा

२७ **सर्वादीनि सर्व-नामानि** ३२,३६

२८ विभाषा दिक्-समासे **बहु-व्रीहौ** २९

२९ **न** बहु-व्रीहौ ३२

३० तृतीया-**समासे** ३२

३१ **द्वन्द्वे** च ३२

३२ **विभाषा जसि** ३६

---

* पतञ्जलिवाक्यमिदम्, नतु पाणिनिसूत्रम् । आर्यसमाजिनां हठ एव ।

१ वृद्धिः शब्दो मङ्गलार्थं प्रयुक्तो ब्रह्मण्येषा बृंहणाद् वृद्धिरास्ते ।
तद् वै ब्रह्मेदं जगद् बृंहणेनेत्येवं लोके वृद्धिमृच्छेत् सदैव ॥

४ धात्वंशलोपे इत्यर्थः ।

५ अत्र ग् च क् च ङ् चेति क्ङः । क्ङः इतः यस्येति क्ङित्, तस्मिन् इति क्ङिति । द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति नियमात् इत् शब्देन प्रत्येकसंयोगे गिति किति ङिति इत्यर्थो लभ्यते । ततश्चानुवृत्तिपदैर्योगः कार्यः।

१० पञ्चप्रयत्नपक्षे नास्य सूत्रस्य प्रयोजनम् । ( भाष्ये )

२४ 'षट्' इति बहुवचनान्तम् न तु एकवचनान्तम्, 'षड्भ्यो लुक् ७।१।२२' इति प्रामाण्यात् । अत्रापि आर्यसमाजिहठः । नान्ताः पञ्च षान्तश्चैक इति षट् ष्णान्ताः शब्दाः सन्ति—पञ्चन्, सप्तन्, अष्टन्, नवन्, दशन् इति नान्ताः । षष् इत्येकः षान्त इत्थमेवम् षट्-इति-षष् शब्दस्य बहुवचनान्तं रूपं ज्ञेयम् ।

३३ प्रथम-चरम-तयाल्पार्ध-कतिपय-नेमाश्च (तीयस्य ङित्सूपसंख्यानम्)
३४ पूर्व-परावर-दक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्
३५ स्वमज्ञाति-धनाख्यायाम्
३६ अन्तरं बहिर्योगोपसंव्यानयोः ( इति सर्वनामप्रकरणम् )
३७ स्वरादि-निपात**मव्ययम्** ४१
३८ तद्धितश्चासर्व-विभक्तिः
३९ कृन्मेजन्तः
४० क्त्वा-तोसुन्-कसुनः
४१ अव्ययीभावश्च ( इत्यव्ययम् )
४२ शि **सर्वनामस्थानम्** ४३
४३ सुडनपुंसकस्य
४४ न वेति विभाषा
४५ इग्यणः संप्रसारणम्
४६ आद्यन्तौ टकितौ
४७ मिदचोऽन्त्यात्परः
४८ एच इग्घ्रस्वादे**शे** ५५
४९ **षष्ठी स्थाने**योगा ५५
५० स्थानेऽन्तरतमः
५१ उरण् रपरः
५२ **अलोऽन्त्यस्य** ५३
५३ ङिच्च
५४ आदेः परस्य
५५ अनेकाल्-शित्-सर्वस्य
५६ **स्थानिवदादेशो**ऽनल्विधौ ५९
५७ **अचः परस्मिन् पूर्वविधौ** ५९,५८
५८ **न** पदान्त-**द्विर्वचन**-वरे-यलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्-चर्विधिषु ५९
५९ द्विर्वचनेऽचि
६० **अदर्शनं** लोपः ६१
६१ प्रत्ययस्य लुक्-श्लु-लुपः ६२
६२ **प्रत्यय-लोपे प्रत्यय-लक्षणम्** ६३
६३ न लुमताऽङ्गस्य
६४ अचोऽन्त्यादि टि
६५ अलोऽन्त्यात्पूर्व उपधा
६६ तस्मिन्निति **निर्दिष्टे** पूर्वस्य ६७
६७ तस्मादित्युत्तरस्य
६८ **स्वं रूपं** शब्दस्याशब्द-संज्ञा ७२
६९ अणुदित् **सवर्णस्य** चाप्रत्ययः ७०
७० तपरस्तत्कालस्य
७१ आदिरन्त्येन सहेता
७२ येन विधिस्तदन्तस्य

---

५९ केषाञ्चिन्मते न इति **द्विवचनम्** इत्युभयमपि पूर्वसूत्रात् स्वर्यते। तत्र स्थानिवदिति नानुवर्तते केवलम् आदेश-मात्रमनुवर्तते। ततश्च 'द्विर्वचनेऽचि' १।१।५९ इति सूत्रे द्विर्वचनं च द्विर्वचनं च द्विर्वचने तस्मिन् द्विर्वचने, सरूपाणां १।२।६४। इत्येकशेषे, द्वित्वनिमित्ते अचि द्विर्वचने कर्तव्ये अचः आदेशो न स्यादित्यर्थः। अचः स्थानिवदादेश इत्युभयमपि ५९ सूत्रावधि आयाति—इति पक्षे न इति नानुवर्तते।

७२ सप्तम्यन्तातिरिक्तविशेषणे अन्तशब्दयोगेन सप्तम्यन्तविशेषणे आदिशब्दयोगेन वृत्तिनिर्माणम्। 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति परिभाषा।

७३ वृद्धिर्यस्याचामादिस्तद् **वृद्धम्** ७५
(वा०) वा नामधेयस्य वृद्धसंज्ञा वक्तव्या
७४ त्यदादीनि च
७५ एङ् प्राचां देशे

वृद्धिरादैन्तवदव्ययीभावः प्रत्ययस्य
लुक् पञ्चदश १५ ॥

**इति प्रथमाध्यायस्य प्रथमः पादः ।**

●

## प्रथमाध्यायस्य द्वितीयः पादः

१ गाङ्-कुटादिभ्योऽञ्णिन्ङित् ४
२ विज **इट्** ३
३ विभाषोर्णोः
४ सार्वधातुकमपित् ५
५ असंयोगाल्लिट् **कित्** ६,२६
७ मृड-मृद-गुध-कुष-क्लिश-वद-वसः **क्त्वा** ८
८ रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छः **सँश्च** १०
९ **इको झल्** ११, १३
१० **हलन्ताच्च** ११
११ **लिङ्-सिचावात्मनेपदेषु** १३,१७
१२ उश्च
१३ वा गमः
१४ हनः **सिच्** १७
१७ स्थाघ्वोरिच्च
१८ **न** क्त्वा **सेट्** २६
१९ **निष्ठा** शीङ्-स्विदि-मिदि-क्ष्विदि-धृषः २२
२१ उदुपधाद्भावादि-कर्मणोऽन्यतरस्याम्
२२ पूङः **क्त्वा** च २६
२३ नोपधात्थफान्ताद्वा २६
२६ रलो व्युपधाद्धलादेः संश्च (इति कित्)
२७ ऊकालोऽ**ज्झ्रस्व-दीर्घ-प्लुतः** ३१,२८
२८ अचश्च
२९ उच्चैरुदात्तः
३० नीचैरनुदात्तः
३१ समाहारः स्वरितः
३३ **एकश्रुति** दूरात्संबुद्धौ ३९
३६ विभाषा छन्दसि
३९ स्वरितात्संहितायाम**नुदात्तानाम्** ४०
४० उदात्त-स्वरित-परस्य सन्नतरः
४१ अपृक्त एकालप्रत्ययः
४२ तत्पुरुषः समानाधिकरणः कर्मधारयः
४३ प्रथमा-निर्दिष्टं **समास उपसर्जनम्** ४४
४४ एक-विभक्ति चापूर्वनिपाते
४५ अर्थवदधातुरप्रत्ययः **प्रातिपदिकम्** ४६
४६ कृत्तद्धित-समासाश्च
४७ **ह्रस्वो** नपुंसके **प्रातिपदिकस्य** ४८
४८ **गोस्त्रियोरुपसर्जनस्य** ४९
४९ लुक्-**तद्धितलुकि** ५०
६४ सरूपाणा**मेक-शेष** एक-विभक्तौ ७२
६५ **वृद्धो यूना तल्लक्षणश्चेदेव विशेषः** ६६,६९

६६ स्त्री पुंवच्च
६७ पुमान्स्त्रिया
६८ भ्रातृ-पुत्रौ स्वसृ-दुहितृभ्याम्
६९ नपुंसकमनपुंसकेनैकवच्चास्या-न्यतरस्याम् ७१
७० पिता मात्रा
७१ श्वशुरः श्वश्र्वा
७२ त्यदादीनि सर्वैर्नित्यम् (इत्येकशेषः)
(वा०) त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते
गाङ्कुटाद्युदुपधादपृक्तश्छन्दसि पुनर्वस्वोस्त्रयोदश १३ ॥

**इति प्रथमाध्यायस्य द्वितीयः पादः ।**

## प्रथमाध्यायस्य तृतीयः पादः

१ भूवादयो **धातवः** ९३
२ **उपदेशेऽजनुनासिक इत्** ( प्रतिज्ञानुनासिक्याः पाणिनीयाः ) ९
३ **हलन्त्यम्** ४
४ न विभक्तौ तुस्माः
५ **आदिर्ञि-टु-डवः** ८
६ षः **प्रत्ययस्य** ८
७ चु-टू
८ ल-श-क्वतद्धिते
९ तस्य लोपः ( इतीत्प्रकरणम् )
१० यथासंख्यमनुदेशः समानाम्
११ **स्वरितेनाधिकारः** ( प्रतिज्ञा-स्वरिताः पाणिनीयाः )
१२ अनुदात्त-ङित **आत्मनेपदम्** ७७
१३ भाव-कर्मणोः
१४ **कर्तरि कर्म-व्यतिहारे** ९३,१६
१५ **न** गति-हिंसार्थेभ्यः १६
१६ इतरेतरान्योऽन्योपपदाच्च
१७ नेर्विशः
१८ परि-व्यवेभ्यः क्रियः
१९ वि-पराभ्यां जेः
२२ समव-प्र-विभ्यः स्थः २६
२६ **अकर्मकाच्च** २९
२८ आङो यम-हनः
२९ समो गम्यृच्छि-प्रच्छि-स्वरत्यर्ति-श्रु-विदिभ्यः
५७ ज्ञा-श्रु-स्मृ-दृशां **सनः** ५९
५८ **नानोर्ज्ञः** ५९
५९ प्रत्याङ्भ्यां श्रुवः
६० शदेः **शितः** ६१
६१ म्रियतेर्लुङ्-लिङोश्च
६२ पूर्ववत्सनः
६३ आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य
६६ भुजोऽनवने
७२ स्वरित-ञितः **कर्त्रभिप्राये क्रिया-फले** ७७
७३ अपाद्वदः
७४ णिचश्च ( इत्यात्मनेपदम् )
७८ शेषात्**कर्तरि परस्मैपदम्** ९३
८३ व्याङ्-परिभ्यो **रमः** ८५
८४ उपाच्च
८५ विभाषाऽकर्मकात्
८६ बुध-युध-नश-जनेङ्-प्रु-द्रु-स्रुभ्यो **णेः** ८९

९० **वा क्यषः** ९३
९१ द्युद्भ्यो लुङि
९२ वृद्भ्यः **स्य-सनोः** ९३
९३ लुटि च क्लृपः (इति परस्मैपदम्)

भूवादयः[1] क्रीडोऽनु वेः[2] [3] पाद-
[4]म्रियतेः प्राद्वहस्त्रयोदश[5] १३ ॥

**इति पाणिनीयसूत्रपाठे प्रथमाध्यायस्य तृतीयः पादः ।**

●

## प्रथमाध्यायस्य चतुर्थः पादः

१ **आकडारादेका संज्ञा** २।२।३८
२ विप्रतिषेधे परं कार्यम्
३ **यू स्त्र्याख्यौ नदी** ६
४ **नेयङुवङ्स्थानावस्त्री** ६
५ **वाऽऽमि** ६
६ ङिति **ह्रस्वश्च** ( इति नदी ) ७
७ **शेषो घ्यसखि** ९
८ **पतिः** समास एव ( इति घि ) ९
१० **ह्रस्वं** लघु ११
११ संयोगे **गुरु** १२
१२ दीर्घं च
१३ यस्मात्प्रत्यय-विधिस्तदादि प्रत्ययेऽङ्गम्
१४ सुप्-तिङन्तं **पदम्** १७
१५ नः क्ये
१६ सिति च
१७ **स्वादिष्वसर्वनामस्थाने** १८
१८ यचि **भम्** २०
१९ तसौ मत्वर्थे ( इति पद-भे )
२१ बहुषु बहुवचनम्
२२ द्व्येकयोर्द्विवचनैकवचने
२३ **कारके** ५५
२४ ध्रुवमपायेऽ**पादानम्** ३१
२५ भीत्रार्थानां भय-हेतुः
२६ पराजेरसोढः
२७ वारणार्थानामीप्सितः
२८ अन्तर्धौ येनादर्शनमिच्छति
२९ आख्यातोपयोगे
३० जनि-**कर्तुः** प्रकृतिः ३१
३१ भुवः प्रभवः
३२ कर्मणा यमभिप्रैति स **संप्रदानम्** ४१
३३ रुच्यर्थानां प्रीयमाणः
३५ धारेरुत्तमर्णः
३६ स्पृहेरीप्सितः
३७ क्रुध-द्रुहेर्ष्या-सूयार्थानां **यं प्रति कोपः** ३८
३८ क्रुध-द्रुहोरुपसृष्टयोः कर्म
४२ **साधकतमं करणम्** ४४
४३ दिवः कर्म च
४५ **आधारो**ऽधिकरणम् ४८
४६ अधि-शीङ्-स्थासां **कर्म** ४८
४७ अभि-नि-विशश्च
४८ उपान्वध्याङ्-वसः
४९ कर्तुरीप्सिततमं **कर्म** ५३
५० तथा-युक्तं चानीप्सितम्
५१ अकथितं च
५२ गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्मा-कर्मकाणामणि **कर्ता स णौ** ५३

---

३ यू इति लुप्तप्रथमविभक्तिकम् पदम् ।

आ [१] कडाराद् [२] बहुषु [३] अनुप्रतिगृणऊर्यादि[४] [५] च्छन्दसि [६] तिङो दश १० ॥

**इति प्रथमाध्यायस्य चतुर्थः पादः ।**

●

## द्वितीयाध्यायस्य प्रथमः पादः



---

१ सङ्गतः अर्थः समर्थः, संसृष्टः अर्थः समर्थः, सम्प्रेक्षितः अर्थः समर्थः, सम्बद्धः अर्थः समर्थः—इति चतुर्धा विग्रहः । सर्वत्रैव सम् इत्यतः परतः गतादिशब्दस्य लोपेन मध्यमपदलोपे कर्मधारयसमासेन समर्थशब्दसिद्धिः । पदस्य पदयोः पदानां विधिः पदविधिः इति सर्ववचनैः विगृह्य षष्ठीसमासः कार्यः । पाद-द्वयान्तम् २।२।३८ यावत् समासप्रकरणम् पदविधिः ।

३ समसनं समासः । 'द्वन्द्वो द्विगुरपि चाहं, मद्गेहे नित्यमव्ययीभावः । तत्पुरुष कर्मधारय, येनाहं स्यां बहुव्रीहिः ॥' 'चकारबहुलो द्वन्द्वः, स चासौ कर्मधारयः । यस्य येषां बहुव्रीहिः, शेषस्तत्पुरुषो मतः ॥' 'उभयपदप्रधानो द्वन्द्वः,

उषा ओम् झटिति तरसा सुष्ठु कु अञ्जसा चिरम् चिररात्राय चिरेण चिरस्य चिरात् चिराय अस्तम् स्थाने वरम् दुष्ठु बलात् तु शु अर्वाक् सुदि वदि इत्यादि ।

**तसिलादयः प्राक् पाशपः** ५।३।४७—शस्-तसीत्यादि । **चादयोऽसत्त्वे** १।४।५७—च वा ह अह एव एवम् नूनम् शश्वत् युगपत् भूयस् कूपत् सूपत् कुवित् नेत् चेत् चण् कच्चित् नह हन्त माकिम् यावत् तावत् खलु किल स्म यत् तत् किम् पुरा धिक् हा आहो उताहो आहोस्वित् हो अहो भो ननु इति शङ्के ऋतम् जातु कथम् अनु कं खं पशु । उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः । आकृतिगणोऽयम् । इति चादयः । ततः हां अथकिं अस्तु भवतु इत्यादि ।

**प्रादयः** १।४।५८—'प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्यपयः । उप आङिति विंशतिरेष सखे उपसर्गगणः कथितः कविना' ॥ इति प्रादयः ।

**ऊर्यादिच्विडाचश्च** १।४।६१—ऊरी उररी पापी ताली आताली वेताली धूली धूसी शकलेत्यादि ऊर्यादयः ।

**साक्षात्प्रभृतीनि च** १।४।७४—साक्षात् मिथ्या चिन्ता भद्रा रोचना आस्थेत्यादि ।

**तिष्ठद्गुप्रभृतीनि च** २।१।१७ तिष्ठद्गु वहद्गु आयतीगवम् खलेयवम् खलेबुसम् लूनयवम् लूयमानयवम् पूतयवम् पूयमानयवम् संहृतयवम् संह्रियमाणयवम् संहृतबुसम् संह्रियमाणबुसम् । इच् प्रत्ययः । समभूमि इत्यादि ।

**सप्तमी शौण्डैः** २।१।४०—शौण्ड धूर्त कितव व्याड प्रवीण संवीत अन्तर अधि पटु पण्डित कुशल चपल निपुण । इति शौण्डादिः ।

**पात्रेसमितादयश्च** २।१।४८—पात्रेसमिताः कूपमण्डूकः गेहेनर्दी । आकृतिगणोऽयम् । तेन गेहेमेही खट्वामूत्री धौतप्रस्रावी कर्णेटिरटिरेत्यादि ।

**उपमितं व्याघ्रादिभिः सामान्याप्रयोगे** २।१।५६—व्याघ्र सिंह ऋक्ष ऋषभ चन्दन वृषभ वृष हस्तिन् कुञ्जर इत्यादि व्याघ्रादिः ।

**शाकपार्थिवादिसिद्धये उत्तरपदलोपो वाच्यः** २।१।६० शाकपार्थिव कुतुपसौश्रुत अजातौल्वलि । आकृतिगणोऽयम् । तेन कृतापकृत गतप्रत्यागत यातानुयात मुखनासिका क्रयाक्रयिका मानोन्मानिका पीतविपीतेत्यादि ।

**मयूरव्यंसकादयश्च** २।१।७२—मयूरव्यंसक छात्रव्यंसक उच्चावचम् निश्चप्रचम् । जहिजोडादयोऽन्यपदार्थे । जहिजोडम् आहरवनिता अहमहमिका आहोपुरुषिका उच्चनीचम् । आकृतिगणोऽयम् । अकुतोभयः कान्दिशीकः यदृच्छा इत्यादि । द्रव्यान्तरम् अवश्यकार्यम् इत्यादय आकरे द्रष्टव्याः ।

**राजदन्तादिषु परम्** २।२।३१ राजदन्तः लिप्तवासितम् नग्नमुषितम् सिक्त-संमृष्टम् कर्षितोप्तम् उलूखलमूसलम् शूद्रार्यम् अक्षिभ्रुवम् दारगवम् अर्थशब्दौ शब्दार्थौ धर्मकामौ कामार्थौ भार्यापती दम्पती जम्पती जायापती पुत्रपती आद्यन्तौ अन्तादी गुणवृद्धी वृद्धिगुणौ यथोचितम् राजवैद्य वैद्यराज । इति राजदन्तादिः ।

**आहिताग्न्यादिषु** २।२।३७—आहिताग्नि जातपुत्र जातदन्त जातश्मश्रु तैल-पीत घृतपीत ऊढभार्य गतार्थ । आकृतिगणोऽयम् । तेन गीतप्रिय प्रियव्रत व्रतप्रिय गडुकण्ठ अस्युद्यत दण्डपाणिप्रभृतयः सर्वे यथाप्राप्तं ज्ञेयाः ।

**कडाराः कर्मधारये** २।२।३८—कडार गडुल खञ्ज खोड काण कुण्ठ खलति गौर वृद्ध वधिर मठर कब्ज बर्बर पिङ्ग पिङ्गल जठर तनु इति कडारादिः ।

**प्रकृत्यादिभ्य उपसंख्यानम्** २।३।१८—प्रकृति आकृति प्राय गोत्र सम विषम पञ्चक साहस्र द्विद्रोण । इत्यादि आकृतिगणः ।

**गवाश्वप्रभृतीनि च** २।४।११—गवाश्वम् गवाविकम् गवैडकम् अजाविकम् अजैडकम् कुब्जवामनम् कुब्जकिरातम् पुत्रपौत्रम् श्वचण्डालम् स्त्रीकुमारम् दासी-माणवकम् शाटीपटीरम् शाटीप्रच्छदम् शाटीपट्टिकम् उष्ट्रखरम् मांसशोणितम् दर्भ-शरम् दासीदासम् इत्यादि गवाश्वादिः ।

**अर्द्धर्चाः पुंसि च** २।४।३१—अर्द्धर्च गोमय कषाय कार्षापण कुतप कुणप कपाट । असंख्याः शब्दाः अर्द्धर्चादय आकरे द्रष्टव्याः इमाः ।

**कण्ड्वादिभ्यो यक्** ३।१।२७—कण्डूञ् मन्तु हृणीङ् वल्गु असु महीङ् मनस् । आकृतिगणोऽयम् ।

**नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** ३।१।१३४—( १ ) [ नन्दिवाशिमदिदूषिसाधिवर्द्धिशोभिरोचिभ्यो ण्यन्तेभ्यः संज्ञायाम् ] नन्दनः वाशनः मदनः दूषणः साधनः वर्द्धनः शोभनः रोचनः । सहितपिदमः संज्ञायाम्—सहनः तपनः दमनः जल्पनः रमणः दर्पणः संक्रन्दनः संकर्षण संहर्षणः जनार्दनः यवनः मधुसूदनः विभीषणः लवणः चित्तविनाशनः कुलदमनः शत्रुदमनः । इति नन्द्यादिः ।

( २ ) ग्राही उत्साही उदासी उद्भासी स्थायी मन्त्री संमर्दी ( रक्षश्रुवपशां नौ ) निरक्षी निश्रावी निवापी निशायी । ( याचृव्याहृसंव्याहृव्रजवदवसां प्रति-षिद्धानाम् ) अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी । ( अचाम-चित्तकर्तृकाणाम् ) अकारी अहारी अविनायी विशायी विषयी । इति ग्रह्यादिः ।

३—पच वच वप वद चल पत नदट् भषट् प्लवट् चरट् गरट् तरट् चोरट् गाहट् सरट् देवट् दोषट् श्वपच । पचादिराकृतिगणः ।

**कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्** ३।२।५—मूलविभुज नखमुच कामगुह कुमुद महीध्र कुध्र गिध्र । आकृतिगणोऽयम् ।

**भविष्यति गम्यादयः** ३।३।३—गमी भावी प्रस्थायी प्रतिरोधीत्यादि-प्रतिपूर्वकेगुपधा धातवः ।

**षिद्भिदादिभ्योऽङ्** ३।३।१०४—भिदा विदारणे । छिदा द्वैधीकरणे । विदा । गुहा गिर्योषध्योः, देवखात विलेऽपि । आरा शस्त्र्याम् । कारा बन्धने । तारा ज्योतिषि । धारा प्रपाते । रेखा चूडा पीडा वसा मृजा त्रपा । क्रपेः सम्प्रसारणं च, कृपा । इति भिदादिः ।

**सम्पदादिभ्यः क्विप्** ३।३।९४—विपद् आपत् प्रतिपद् परिषद् इत्यादयः ।

**अजाद्यतष्टाप्** ४।१।४—अजा एडका कोकिला चटका अश्वा मूषिका बाला होडा पाका वत्सा मन्दा विलाता पूर्वापहाणा अपरापहाणा । संभस्त्राजिनशण-पिण्डेभ्यः फलात् । सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात् । शूद्रा चामहत्पूर्वा जातिः । क्रुञ्चा उष्णिहा देवविशा ज्येष्ठा कनिष्ठा । मध्यमा पुंयोगेऽपि । मूलान्नञः । दंष्ट्रा छात्रा । इति अजादिः ।

**भीमादयोऽपादाने** ३।४।७४—भीम भीष्म भयानक वह चर प्रस्कन्दन प्रप-तन प्रतपन समुद्र स्रुव स्रुक् वृष्टि दृष्टि रक्षः मूर्ख खलति । आकृतिगणोऽयम् ।

**नित्यं सपत्न्यादिषु** ४।१।३५—समान एक वीर पिण्ड स्व ( श्व ) भ्रातृ भद्र पुत्र दास इति । आकृतिगणोऽयम् ।

**न षट्स्वस्रादिभ्यः** ४।१।१०—'स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः' ॥

**षिद्गौरादिभ्यश्च** ४।१।४१—गौर मत्स्य मनुष्य शृङ्ग पिङ्गल हय गवय मातामह पितामह इत्यादि गौरादिः । अन्ये शब्दा आकरे द्रष्टव्याः ।

**अश्वपत्यादिभ्यश्च** ४।१।८४—अश्वपति ज्ञानपति शतपति धनपति स्थानपति गणपति यज्ञपति राष्ट्रपति गृहपति कुलपति पशुपति धान्यपति धन्वपति बन्धुपति धर्मपति सभापति प्राणपति क्षेत्रपति । इत्यश्वपत्यादिः ।

**न क्रोडादि बह्वचः** ४।१।५६—कल्याणक्रोडा ( क्रोडाशब्दोऽपि स्त्रीलिङ्ग एव ) कल्याणखुरा कल्यणोखा कल्याणबाला कल्याणमुखा इत्यादिराकृतिगणः ।

**शिवादिभ्योऽण्** ४।१।११२ शिव प्रोष्ठ प्रौष्ठिक चण्ड दम्भ इत्यादि । आकृतिगणः ।

**क्रतूक्थादिसूत्रान्ताट्ठक्** ४।२।६०—उक्थ लोकायत न्यास न्याय पुनरुक्त निरुक्त निमित्त द्विपदा ज्योतिष अनुपद अनुकल्प यज्ञ धर्म चर्चा क्रमेतर श्लक्ष श्लक्षण संहिता पदक्रम संघट संघट्ट वृत्ति परिषद् संग्रह गण गुण आयुर्वेद आयुर्देव । इत्युक्थादिः ।

**क्रमादिभ्यो वुन्** ४।२।६१—क्रम पद शिक्षा मीमांसा । इति क्रमादिः ।

**नद्यादिभ्यो ढक्** ४।२।९७—नदी मही वाराणसी श्रावस्ती कौशाम्बी इत्यादि ।

**दण्डादिभ्यो यत्** ५।१।६६—दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भंग । इति दण्डादिः ।

**पृथ्वादिभ्य इमनिज्वा** ५।१।१२२ । पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिञ्चन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु । इति पृथ्वादिः ।

**वर्णदृढादिभ्यः ष्यञ्च** ५।१।१२३—दृढ वृढ परिवृढ भृश कृश वक्र शुक्र क्रुष्ट लवण शीत उष्ण जड बधिर पण्डित मधुर मूर्ख स्थिर इत्यादि ।

**गुणवचनब्राह्मणादिभ्यः कर्मणि च** ५।१।१२४—ब्राह्मण वाडव माणव । अर्हतो नुम् च । चोर धूर्त एकभाव द्विभाव । आकृतिगणोऽयम् । इति ब्राह्मणादिः ।

**'चतुर्वेदादिभ्य उभयपदवृद्धिश्च'** ५।१।१२४—चतुर्वेद चतुर्वर्ण चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेनापति अनन्तर संनिधि समीप उपमा सुख तदर्थ इतिह मणिक इति चतुर्वेदादिः ।

**तदस्य सञ्जातं तारकादिभ्य इतच्** ५।२।३६—तारका पुष्प कर्णक मञ्जरी प्रत्यय दीक्षा गर्ज । गर्भादप्राणिनि । इति तारकादिराकृतिगणः ।

**प्रज्ञादिभ्यश्च** ५।४।३८—प्रज्ञ मनस् मरुत् क्रुञ्च रक्षस् कर्षापण देवता बन्धु इत्यादि ।

**उरःप्रभृतिभ्यः कप्** ५।४।१५१—उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शाली शालिः । अर्थान्नञः । इत्युरःप्रभृतयः ।

**स्त्रियाः पुंवद्भाषितपुंस्कादनूङ्समानाधिकरणे स्त्रियामपूरणी प्रियादिषु** ६।३।३४—प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कान्ता ।

**तसिलादिष्वाकृत्वसुचः** ६।३।३५ तसिल् त्रल् तरप् तमप् चरट् जातीयर् कल्पप् देशीयर् रूपप् पाशप् थल् थाल् दार्हिल् तिल् थ्यन् । इति तसिलादिः ।

**पृषोदरादीनि यथोपदिष्टम्** ६।३।१०६ पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच वृसी मयूर । इति पृषादरादिराकृतिगणः ।

**अनुशतिकादीनां च** ७।३।२०—अनुशतिक इहलोक परलोक सर्वलोक सर्व-पुरुष । इत्यनुशतिकादिराकृतिगणः ।

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः** ८।२।९—यव दलिम ऊर्मि भूमि कृमि द्राक्षा हरित् ककुद् मरुत् । इति यवादिराकृतिगणः ।

**क्षुभ्नादिषु च** ८।४।३९—क्षुभ्न नृनमन नन्दिन् नन्दन नगर । एतान्युत्तरप-दानि संज्ञायां प्रयोजयन्ति । नृतिर्यङि प्रयोजयन्ति । नरीनृत्यते । आचार्यादणत्वं च । आकृतिगणोऽयम् । पाठान्तरम् क्षुभ्ना तृप्नु नृनमन अग्नि अनूप ।



## अथ संक्षिप्तोणादिपाठः

कृवापाजिमिस्वदिसाध्यशूभ्य उण् ।१। करोतीति कारुः शिल्पी, कारकश्च । वातीति वायुः । पायुर्गुदम् ( आतो युक् ) । जयति रोगान् इति जायुरौषधम् । मिनोति देहे ऊष्माणम् इति मायुः वित्तम् । स्वादु । साध्नोति परकार्यम् इति साधुः । अश्नुते इति आशु शीघ्रम् । दृसनिजनिचरिचटिभ्यो ञुण् ।३। दीर्यत इति दारु काष्ठम् । सन्यते इति सानुः । 'स्नुः प्रस्थः सानुरस्त्रियाम्' । जानु जानु-नीत्यादि अनुबन्धद्वयसामर्थ्यात् 'जनिवध्योश्च ७।३।३५' इति न वृद्धिनिषेधः । चारु रम्यम् । चाटु प्रियं वाक्यम् । त्रो रश्च लः ।५। तरन्त्यनेन वर्णाः इति तालुः । कृके वचः कश्च ।६। कृकेण गलेन वक्तीति कृकवाकुः । ( 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ) । भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ।७। भरतीति भरुः स्वामी हरश्च । म्रियन्तेऽस्मिन् भूतानि इति मरुर्निर्जलदेशः । शेते इति शयुरजगरः । तरति जले इति तरुर्वृक्षः । चरन्ति देवा इति चरुः । त्सरुः खड्ग-मुष्टिः । तन्यते इति तनुस्वल्पम् । 'स्त्रियां मूर्तिस्तनुस्तनूः' । धनुः । 'धनुषा च धनुं विदुः' । मयुः किन्नरः मद्गुः जलकाकः । न्यङ्क्वादित्यात् कुत्वम् । सस्य जश्त्वेन दः । अणश्च ।८। लवलेशः कणाणवः । इत्युणादिक्रमः । "संज्ञासु धातु-रूपाणि प्रत्ययाश्च ततः परे । कार्याद्विद्यादनुबन्धमेतच्छास्त्रमुणादिषु" ॥ पृथक् मुद्रितपुस्तकमस्ति क्रीत्वा ग्राह्यम् । उपयोगि तत् ।



## अथ संक्षिप्त लिङ्गानुशासनम् ।

१—लिङ्गम् २—स्त्री ( इत्यधिकृते ) ३—मिन्यन्तः ४—क्तिन्नन्तः ५—ईकारान्तश्च ६—ऊङाबन्तश्च ७—विंशत्यादिरानवतेः ८—तलन्तः । ९—पुमान् ( अधिकृत्य ) १०—घञबन्तः ११—घाजन्तश्च १२—क्यन्तो घुः १३—दाराक्षतलाजासूनां बहुत्वं च । १४—नपुंसकम् ( अधिकृत्य ) १५—भावे ल्युडन्तः १६—निष्ठा च १७—त्वष्यञौ १८—द्वन्द्वैकत्वम् १९—इसुसन्तः २०—असन्तो द्व्यच्कः २१—त्रान्तः २२—फलजातिः । २३—अविशिष्टलिङ्गम् ( अधिकृतम् ) २४—अव्ययं कतियुष्मदस्मदः २५—ष्णान्ता षट् २६—गुणवचनं च । २७—कृत्याश्च २८—करणाधिकरणयोर्ल्युट् २९—सर्वादीनि सर्वनामानि ।

## शिक्षायामनुबन्ध-विचारः

बहूपयोगिनः सर्वेऽनुबन्धाः पाणिनेर्मताः ।
वैज्ञानिकाः प्रशंसन्ति प्रख्याताः शिक्षका हि ये ॥
धातुप्रत्ययगाः सर्वे सार्थका ये प्रकीर्तिताः ।
अनुबन्धाः प्रदर्श्यन्ते मनागध्यायिनां कृते ॥

आत्मनेपदिनामकारः **अनुदात्तङित आत्मनेपदम्** १।३।१२ इत्यात्मनेपदार्थः । ( परस्मैपदिनान्तूच्चारणार्थः ) । उभयपदिनामकारः **स्वरितञितः कर्त्रभिप्राये क्रियाफले** १।३।७२ इति उभयपदार्थः । आकारः **आदितश्च** ७।२।१६ इति इण्निषेधार्थः । इकारः **इदितो नुम् धातोः** ७।१।५८ इति विशेषणार्थः । ईकारः **श्वीदितो निष्ठायाम्** ७।२।१४ इति विशेषणार्थः । उकारः **उदितो वा** ७।२।५६ इति विशेषणार्थः । ऊकारः **स्वरति-सूति-सूयति-धूञूदितो वा** ७।२।४४ इति विशेषणार्थः । ऋकारः **नाग्लोपिशास्वृदिताम्** ७।४।२ इति विशेषणार्थः । लृकारः **पुषादिद्युताद्यॢदितः परस्मैपदेषु** ३।१।५५ इति विशेषणार्थः । एकारः **ह्म्यन्त-क्षण-श्वस जागृ-णि-श्व्येदिताम्** ७।२।५ इति विशेषणार्थः । ओकारः **ओदितश्च** ८।२।४५ इति विशेषणार्थः । 'इक् स्मरणे' इत्यत्र ककारः **अधीगर्थदयेशां कर्मणि** २।३।५२ इति विशेषणार्थः । ङकारः **अनुदात्तङित आत्मनेपदम्** १।३।१२ इत्यात्मनेपदार्थः । ञकारः **स्वरित-ञितः कर्त्रभिप्राये क्रियाफले**

१।३।७२ इति विशेषणार्थः। षकारः **षिद्भिदादिभ्योऽङ्** ३।३।१०४ इति विशेषणार्थः। टकारः **पाघ्राध्माधेट्दृशः शः** ३।१।१३७ इति विशेषणार्थः। दाणो णकारः **दाणश्च सा चेच्चतुर्थ्यर्थे** १।३।५५ इति विशेषणार्थः। इणो णकारः **इणो गा लुङि** २।४।४५ इति विशेषणार्थः। दाप् दैपोः पकारः **दा-धाघ्वदाप्** १।१।२० इति विशेषणार्थः। टु-शब्दः **ट्वितोऽथुच्** ३।३।८९ इत्यर्थः। डु शब्दः **ड्वितः क्त्रिः** ३।३।८८ इत्यर्थः। ञि-शब्दः **ञीतः क्तः** ३।२।१८७ इत्यर्थः। इर्‌शब्दः **इरितो वा** ३।१।५७ इत्यर्थः। अथ क्रियावाचिभ्यो धातुभ्या लः स्थाने तिङ्प्रत्ययाः भवन्ति। ते च यथा—**तिप्तस्झिसिप्थस्थमिब्वस्-मस्तातांझथासाथांध्वमिड्वहिमहिङ्** ३।४।७८ इत्यष्टादश। **विभक्तिश्च** १।४।१०४ इति **सुपः** १।४।१०३ **तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः** १।४।१०१ इति च प्रथममध्यमोत्तमा विभक्तयोऽपि कथ्यन्ते। अत्र पकारादयः सर्वेप्यनुबन्धाः कार्य्यार्थाः। तथाहि—पकारः **अनुदात्तौ सुप्पितौ** ३।१।४ इति विशेषणार्थः। टकारः **इटोऽत्** ३।४।१०६ इति विशेषणार्थः। ङकारः **तिङ्-प्रत्याहारार्थः**। पूर्वे नव परस्मैपदं, परे नवात्मनेपदम्। **तङानावात्मनेपदम्** १।४।१०० इति तङ आत्मनेपदसंज्ञायाम्, अवशिष्टानां नवानां **लः परस्मैपदम्** १।४।९९ इति परस्मैपदम् (अप्रकल्प्य चापवादविषयम् उत्सर्गोऽभिनिविशते) इति न्यायात्। लट् लिट् लुट् लृट् लेट् लोट् इति षट् टितः। लङ् लिङ् लुङ् लृङ् चत्वारो ङितः। अत्राप्यनुबन्धा अकारादयः कार्यार्थाः। **विदो लटो वा** ३।४।८३ **लिटः कानज्वा** ३।२।१०६ **लुटः प्रथमस्य डारौरसः** २।४।८५ **लृट् शेषे च** ३।३।१३ **लेटोऽडाटौ** ३।४।९४ **लोटो लङ्वत्** ३।४।८५। एषु अकारादयश्चरितार्थाः। टकाराः **टित आत्मनेपदानां टेरे** ३।४।७९ इत्यर्थाः। **लङः शाकटायनस्यैव** ३।४।१११ **लिङः सीयुट्** ३।४।१०२ **च्लि लुङि** ३।१।४३ **स्यतासी लृलुटोः** ३।१।३३। एषु अपि अकारादयश्चरितार्थाः। ङकाराः **नित्यं ङितः** ३।४।९९ इत्यर्थाः। लकारा धातुभ्यो विधीयन्ते। ते च धातवो गणस्थाः प्रत्ययान्ताश्चेति द्विविधाः। गणस्थाः प्रायः सहस्रद्वयसंख्यकाः २०००। सौत्राः प्रत्ययान्ताश्चेति अनन्ताः। **भूवादयो धातवः** १।३।१ **सनाद्यन्ता धातवः** ३।१।३२ तेऽपि सकर्मकाकर्मकभेदेन द्विधा। सकर्मकाः कर्मापेक्षक्रियार्थकाः। अकर्मकाः कर्मनिरपेक्षक्रियार्थकाः। तेभ्यश्च **लः कर्मणि च भावे चाकर्मकेभ्यः** ३।४।६९ (अकर्मकेभ्यो धातुभ्यो भावे कर्त्तरि सकर्मकेभ्यः कर्मणि कर्त्तरि च लो भवति) इति लकारविधिसूत्रम्। इमे च विकरणप्रत्ययभेदतोऽपि दशधा तथाहि—**कर्त्तरि शप्** ३।१।६८ **अदिप्रभृतिभ्यः शपः** २।४।७२ **जुहोत्यादिभ्यः**

**श्लुः** २।४।७५ **दिवादिभ्यः श्यन्** ३।१।६९ **स्वादिभ्यः श्नुः** ३।१।७३ **तुदादिभ्यः शः** ३।१।७७ **रुधादिभ्यः श्नम्** ३।१।७८ **तनादिकृञ्भ्य उः** ३।१।७९ **क्र्यादिभ्यः श्ना** ३।१।८१ **सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्** ३।१।२५। तत्र सर्वेऽपि यथायोग्यं परस्मैपदात्मनेपदोभयपदभेदेन त्रिधा भवन्तोऽपि लक्षणान्तरभेदेन परस्परं परिवर्त्तन्ते उपसर्गादियोगात्। सकर्मकादिभेदोऽपि विपरिवर्तते। यथा भवति, अनुभवति। इत्यादि। विशति, निविशते। इत्यादि चेति संक्षेपः।

## संक्षिप्त-धातुपाठः

### अथ भ्वादयः

उदात्तः परस्मैभाषः–( १ ) भू–सत्तायाम्। अनुदात्ताः परस्मैभाषाः–( २ ) द्रु–गतौ ( ३ ) स्रु–गतौ ( ४ ) श्रु–श्रवणे ( ५ ) क्षि–क्षये ( ६ ) जि–जये ( अकर्मकोऽयम् ) ( ७ ) स्मृ–चिन्तायाम् ( ८ ) ह्वृ–कौटिल्ये। उदात्तः परस्मैभाषः–( ९ ) तॄ–प्लवनतरणयोः। अनुदात्ताः परस्मैपदिनः–( १० ) पा–पाने ( ११ ) घ्रा–गन्धोपादाने ( १२ ) ध्मा–शब्दाग्निसंयोगयोः ( १३ ) म्ना–अभ्यासे ( १४, १५ ) ग्लै, म्लै–हर्षक्षये ( १६ ) दाण्–दाने ( १७ ) ष्ठा–गतिनिवृत्तौ ( १८ ) गम्लृ–गतौ ( १९ ) यम–उपरमे ( २० ) णम–प्रह्वत्वे शब्दे च ( २१ ) दह–भस्मीकरणे ( २२ ) त्यज–हानौ ( २३ ) तप–सन्तापे। उदात्ताः उदात्तेतः–( २४ ) क्रमु–पादविक्षेपे ( २५ ) चिती–संज्ञाने ( २६ ) षिध–गत्याम् ( २७ ) शुच–शोके ( २८ ) वृषु–सेचने ( २९ ) च्युतिर्–आसेचने ( ३० ) गद–व्यक्तायां वाचि ( ३१ ) पठ–व्यक्तायां वाचि ( ३२ ) टुणदि–समृद्धौ ( णिदि-कुत्सायाम् ) ( ३३ ) चुबि–वक्त्रसंयोगे ( अकि लक्षणे ) ( ३४ ) लुठि–स्तेये ( ३५ ) वृहि–वृद्धौ ( ३६ ) वाछि–इच्छायाम् ( ३७ ) रहि–गतौ ( ३८ ) मडि–भूषायाम् ( ३९ ) लाछि–लक्षणे ( ४० ) अर्ह–पूजायाम् ( ४१ ) अर्च–पूजायाम् ( ४२ ) अर्द–गतौ याचने च ( ४३ ) गर्ज–शब्दे ( ४४ ) तर्ज–भर्त्सने ( ४५ ) चर्व–अदने ( ४६ ) अञ्चु–गतिपूजनयोः ( ४७ ) अत–सातत्यगमने। अनुदात्ताः उदात्तेतः–( ४८ ) दंश–दशने ( ४९ ) दृशिर्–प्रेक्षणे ( ५० ) वस–निवासे। उदात्तौ उदात्तेतौ–( ५१-५२ ) वद, जप व्यक्तायां वाचि ( जप मानसे च )। उदात्ता अनुदात्तेतः–( ५३ ) एध–वृद्धौ ( ५४ )

ईक्ष–दर्शने (५५) ऊह–वितर्के (५६) डीङ्–विहायसा गतौ (५७) द्युत–दीप्तौ (५८) रुच–दीप्तावभिप्रातौ च (५९) स्रंसु ध्वंसु भ्रंसु–अवस्रंसने, ध्वंसु गतौ च। भ्रंशु इत्यपि केचित, तृतीय एव तालव्यान्त इत्यन्ये। (६०) श्विता–वर्णे (६१) ञिष्विदा स्नेहनमोचनयोः। मोहनयोरित्यन्ये। (६२) ञिमिदा–स्नेहने (६३) घुट परिवर्तने (६४) रुट, लुट, लुठ–प्रतिघाते (६५) शुभ–दीप्तौ (६६) क्षुभ–सञ्चलने (६७) स्रम्भु–विश्वासे (६८) वृतु–वर्तने (६९) वृधु–वृद्धौ (७०) शृधु–शब्दकुत्सायाम् (७१) रमु–क्रीडायाम् (रम इति माधवः) (७२) रभ–राभस्ये (७३) डुलभष्–प्राप्तौ। (७४) भिक्ष भिक्षायामलाभे लाभे च (७५) षेवृ–सेवन (७६) त्रैङ्–पालने (७७) देङ्–रक्षणे (७८) अय–गतौ (७९) दय–दानगतिहिंसारक्षणदानेषु। (८०) त्रपूष् लज्जायाम्। अथ ञितः उभयतो भाषाः–आद्यः उदात्तः, अन्येऽनुदात्ताः (८१) श्रिञ्–सेवायाम् (८२) णीञ्–प्रापणे (८३) धृञ्–धारणे (८४) हृञ्–हरणे (८५) भृञ्–भरणे। अथ हलन्ताः स्वरितेत उदात्ताः–(८६) खनु–अवदारणे (८७) टुयाचृ–याच्ञायाम् (८८) लष–कान्तौ (८९) शप–आक्रोशे (आक्रोशो–विरुद्धानुध्यानम्)। अनुदात्ताः स्वरितेतः (९०) डुपचष्–पाके (९१) भज–सेवायाम् (९२) यज–देवपूजासंगतिकरणदानेषु (९३) डुवप्–बीजसन्ताने (बीजानां–क्षेत्रविकिरणं गर्भाधानञ्च)। अयं छेदनेऽपि। (९४) वह–प्रापणे (इति भ्वादयः)।

## अथादादयः

अनुदात्तौ उदात्तेतौ–(१) अद–भक्षणे (२) हन–हिंसागत्योः। उदात्तौ उदात्तेतौ–(३) शासु–अनुशिष्टौ (४) विद–ज्ञाने। अनुदात्त उदात्तेत्–(५) इण्–गतौ। उदात्तेतौ उदात्तौ–(६) अस–भुवि (७) रुदिर्–अश्रुविमोचने। अनुदात्त उदात्तेत्–(८) ञिष्वप–शये। उदात्ता उदात्तेतः–(९) श्वस–प्राणने (१०) अन–प्राणने (११) जक्ष–भक्ष-हसनयोः (१२) यु–मिश्रणेऽमिश्रणे च (१३) रु-शब्दे। (१४) णु–स्तुतौ (१५) टुक्षु–शब्दे। अनुदात्ता उदात्तेतः–(१६) या प्रापणे (१७) वा–गतिगन्धनयोः (१८) भा–दीप्तौ (१९) ष्णा–शौचे (२०) पा–रक्षणे (२१) रा–ला द्वावपि दाने (२२) ला–आदाने इति चन्द्रः (२३) मा–माने (२४) दाप्–लवने (२५) ख्या–प्रकथने (२६) वच–परिभाषणे। उदात्त उदात्तेत्–(२७) वश–कान्तौ। आत्मनेपदिनौ उदात्तौ–(२८) षूङ्–प्राणिप्रसवे (२९) शीङ्–स्वप्ने। अनुदात्तौ

आत्मनेपदिनौ–( ३० ) इङ्–अध्ययने ( ३१ ) चक्षिङ्–व्यक्तायां वाचि । उदात्ता अनुदात्तेतः–( ३२ ) आङः शासु–इच्छायाम् ( ३३ ) आस–उपवेशने ( ३४ ) वस–आच्छादने ( ३५ ) ईश–ऐश्वर्ये । ( ३६ ) ईड–स्तुतौ । अथानुदात्तौ उभयपदिनौ–( ३७ ) ष्टुञ्–स्तुतौ ( ३८ ) ब्रूञ्–व्यक्तायां वाचि । अनुदात्ता उभयतो भाषाः–( ३९ ) दुह–प्रपूरणे ( ४० ) दिह–उपचये ( ४१ ) लिह–आस्वादने ( ४२ ) द्विष–अप्रीतौ । चर्करीतं च ( इत्यदादयः ) ।

## अथ जुहोत्यादयः

अनुदात्ताः परस्मैभाषाः–( १ ) हु–दानादनयोः ( आदाने चेत्येके ), प्रीणनेऽपीति भाष्यम् । दानं चेह प्रक्षेपः, स च वैधे आधारे हविषो ग्राह्यः ( २ ) ञिभी–भये ( ३ ) ह्री–लज्जायाम् ( ४ ) ओहाक्–त्यागे । अथानुदात्तौ ङितौ ( ५ ) ओहाङ्–गतौ ( ६ ) माङ्–माने ( अनुदात्ता ञितश्च सर्वे ) ( ७ ) डुभृञ्–धारणपोषणयोः ( ८ ) डुदाञ्–दाने ( ९ ) डुधाञ्–धारणपोषणयोः ( १० ) इति ञितः । णिजिर्–शौचे ( ११ ) विजिर्–भेदे ( १२ ) विष्लृ–व्याप्तौ । णिजिरादयस्त्रय उभयपदिनः । ( इति जुहोत्यादयः )

## अथ दिवादयः

उदात्ता उदात्तेतः–( १ ) दिवु–क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ( २ ) षिवु–तन्तुसन्ताने ( ३ ) ष्ठिवु–निरसने ( केचिदिह इमं न पठन्ति ) ( ४ ) त्रसी–उद्वेगे ( ५ ) प्लुष–दाहे । अनुदात्ता उदात्तेतः ( ६ ) पुष–पुष्टौ ( ७ ) शुष–शोषणे ( ८ ) तुष–प्रीतौ ( ९ ) दुष–वैकृत्ये ( १० ) ष्विदा–गात्रप्रक्षरणे ( ११ ) क्षुध–बुभुक्षायाम् ( १२ ) शुध–शौचे ( १३ ) षिधु–संसिद्धौ ( १४ ) श्लिष–आलिङ्गने । ( रधादयः ) रध ( १५ ) हिंसासंराद्धयोः ( १६ ) णश–अदर्शने ( १७ ) तृप–प्रीणने ( १८ ) दृप–हर्षमोहनयोः ( १९ ) द्रुह–जिघांसायाम् ( २० ) मुह–वैचित्ये ( २१ ) ष्णुह–उद्गिरणे ( २२ ) ष्णिह–प्रीतौ ( वृत् ) । शमादयोऽष्टौ परे च नृत्यन्ता उदात्ता उदात्तेतः–( २३ ) शमु–उपशमे ( २४ ) तमु–कांक्षायाम् ( २५ ) दमु–उपशमे ( २६ ) श्रमु–तपसि खेदे च ( २७ ) भ्रमु–अनवस्थाने ( २८ ) क्षमू–सहने ( २९ ) क्लमु–ग्लानौ ( ३० ) मदी–हर्षे ( वृत् ) ( ३१ ) असु–क्षेपणे ( ३२ ) गृधु–अभिकाङ्क्षायाम् ( ३३ ) यसु–प्रयत्ने ( ३४ ) भ्रंशु–अधःपतने ( ३५ ) कृश–तनूकरणे ( ३६ ) ञितृषा पिपासायाम् ( ३७ ) कुप–कोपे ( ३८ ) हृष–तुष्टौ ( ३९ ) क्षुभ–

संचलने ( ४० ) लुम–विमोहने ( ४१ ) जृष्–वयोहानौ ( ४२ ) नृती–गात्र-विक्षेपे । अनुदात्ता उदात्तेतः–( ४३ ) शो–तनूकरणे ( ४४ ) छो–छेदने ( ४५ ) षो–अन्तकर्मणि ( ४६ ) दो–अवखण्डने ( ४७ ) व्यध–ताडने । जन्यादयः उदात्ता अनुदात्तेतः ( ४८ ) जनी–प्रादुर्भावे ( ४९ ) दीपी–दीप्तौ ( ५० ) पूरी–आप्यायने ( ५१ ) क्लिश–उपतापे । पदादयः अनुदात्ता अनुदात्तेतः–( ५२ ) पद–गतौ ( ५३ ) बुध–अवगमने ( ५४ ) युध–सम्प्रहारे ( ५५ ) अनोरुध–कामे ( ५६ ) खिद–दैन्ये ( ५७ ) विद–सत्तायाम् ( ५८ ) युज–समाधौ ( ५९ ) सृज–विसर्गे ( ६० ) मन–ज्ञाने ( ६१ ) लिश–अल्पीभावे । अनुदात्तौ स्वरितेतौ–( ६२ ) णह–बन्धने ( ६३ ) रञ्ज–रागे । उदात्तः स्वरितेत्–( ६४ ) मृष–तितिक्षायाम् । ( इति दिवादयः ) ।

## अथ स्वादयः

अनुदात्ता उभयतो भाषाः–( १ ) षुञ्–अभिषवे ( २ ) धूञ्–कम्पने, धुञ्–इत्येके ( ३ ) चिञ्–चयने ( ४ ) वृञ्–वरणे ( उदात्तः ) ( ५ ) स्तृञ्–आच्छादने । अथोदात्त अनुदात्तेत्–( ६ ) अशू–व्याप्तौ संघाते च । अनुदात्ताः परस्मैभाषाः ( ७ ) आप्लृ–व्याप्तौ ( ८ ) शक्लृ–शक्तौ ( ९ ) टुदु–उपतापे ( १० ) हि–गतौ । ( इति स्वादयः ) ।

## अथ तुदादयः

( तुदादयः ) षिचन्ताः ( स्वरितेतोऽनुदात्ताः )–( १ ) तुद–व्यथने ( २,३ ) नुद–क्षिप–प्रेरणे ( ४ ) दिश–अतिसर्जने ( ५ ) कृष–विलेखने ( ६ ) मिल–सङ्गमे ( उदात्तः ) ( ७ ) मुच्लृ–मोचने ( ८ ) विद्लृ–लाभे ( ९ ) लुप्लृ–छेदने ( १० ) लिप–उपदेहे ( उपदेहो वृद्धिः ) ( ११ ) षिच–क्षरणे । अनुदात्त उदात्तेत्–( १२ ) खिद–परिघाते । उदात्तेत उदात्ताः–( १३ ) कृती–छेदने ( १४ ) ओव्रश्चू–छेदने ( १५ ) इषु–इच्छायाम् ( १६ ) लुभ–विमोहने ( १७ ) मिल–श्लेषणे ( १८ ) लिख–अक्षरविन्यासे ( १९ ) कुट–कौटिल्ये ( कुटादिः ) ( २० ) कुच–सङ्कोचे ( प्रायेणायं सम्पूर्वः ) ( २१ ) स्फुट–विकसने ( २२ ) स्फुर–सञ्चलने ( २३ ) स्फुल–सञ्चलने ( २४ ) घुट–परिवर्तने ( २५ ) लुट–छेदने ( २६ ) पुट–संश्लेषणे ( २७ ) त्रुट–छेदने ( २८ ) णू–स्तवने ( २९ ) धू–विधूनने । ( कुटादयो वृत्ताः ) । अनुदात्ता उदात्तेतः–( ३० ) टुमस्जो–शुद्धौ ( ३१ ) रुजो–भङ्गे ( ३२ ) भुजो–कौटिल्ये ( ३३ )

मृश–आमर्शने ( आमर्शनं स्पर्शः ) ( ३४ ) स्पृश–संस्पर्शने ( ३५ ) विश–प्रवेशने ( ३६ ) सृज–विसर्गे ( ३७ ) प्रच्छ–ज्ञीप्सायाम् ( ३८ ) षद्लृ–विशरणगत्यवसादनेषु ( ३९ ) शद्लृ–शातने । उदात्ता उदात्तेतः–( ४० ) कॄ–विक्षेपे ( ४१ ) गॄ–निगरणे ( ४२ ) दृभी–ग्रन्थे ( ४३ ) घूर्ण–भ्रमणे । अनुदात्ता आत्मनेपदिनः–( ४४ ) पृङ्–व्यायामे ( प्रायेण व्याङ् पूर्वः ) ( ४५ ) मृङ्–प्राणत्यागे ( ४६ ) दृङ्–आदरे ( प्रायेणायमाङ् पूर्वः ) ( ४७ ) धृङ्–अवस्थाने । उदात्तौ अनुदात्तेतौ–( ४८ ) ओविजी–भय-चलनयोः ( ४९ ) जुषी–प्रीति-सेवनयोः । ( इति तुदादयः ) ।

## अथ रुधादयः

अनुदात्ताः स्वरितेतः–( १ ) रुधिर्–आवरणे ( २ ) भिदिर्–विदारणे ( ३ ) छिदिर्–द्वैधीकरणे ( ४ ) विचिर्–पृथग्भावे ( ५ ) रिचिर्–विरेचने ( ६ ) छृदिर्–सम्पेषणे । अथोदात्त उदात्तेत्–( ७ ) अञ्जू–व्यक्तिम्रक्षणकान्तिगतिषु । अनुदात्ता उदात्तेतः–( ८ ) भञ्जो–आमर्दने ( ९ ) शिष्लृ–विशेषणे ( १० ) पिष्लृ–सञ्चूर्णने ( ११ ) भुज–पालनाभ्यवहारयोः । अनुदात्तावनुदात्तेतौ–( १२ ) खिद–दैन्ये ( १३ ) विद–विचारण । उदात्तोऽनुदात्तेत्–( १४ ) ञिइन्धी–दीप्तौ । ( इति रुधादयः ) ।

## अथ तनादयः

उदात्ताः स्वरितेतः–( १ ) तनु–विस्तारे ( २ ) क्षिणु–हिंसायाम् ( ३ ) तृणु–अदने । अनुदात्त उभयतोभाषः–( ४ ) डुकृञ्–करणे । उदात्तौ अनुदात्तेतौ–( ५ ) मनु–अवबोधने ( ६ ) वनु–याचने । ( इति तनादयः ) ।

## अथ क्र्यादयः

अनुदात्ता उभयतो भाषाः–( १ ) डुक्रीञ्–द्रव्यविनिमये ( २ ) प्रीञ्–तर्पणे कान्तौ च ( ३ ) श्रीञ्–पाके ( ४ ) षीञ्–बन्धने । उदात्ता उभयतो भाषाः–( ५ ) पूञ्–पवने ( ६ ) लूञ्–छेदने ( ७ ) धूञ्–कम्पने ( ८ ) वृञ्–वरणे ( ९ ) ग्रह–उपादाने । अनुदात्तौ परस्मैपदिनौ–( १० ) ज्या–वयो-हानौ ( ११ ) ज्ञा–अवबोधने । उदात्ता उदात्तेतः–( १२ ) पुष–पुष्टौ ( १३ ) मन्थ–विलोडने ( १४ ) ग्रन्थ–सन्दर्भे ( १५ ) बन्ध–बन्धने ( अनुदात्तोऽयम् ) ( १६ ) अश–भोजने ( १७ ) मुष–स्तेये ( १८ ) कुष–निष्कर्षे ( १९ ) क्षुभ–सञ्चलने । उदात्त अनुदात्तेत्–( २० ) वृङ्–सम्भक्तौ ( इति क्र्यादयः ) ।

## अथ चुरादयः

उदात्ताः स्वरितेतः ( १ ) चुर–स्तेये ( २ ) कृत–संशब्दने ( ३ ) क्षल–शौच कर्मणि ( ४ ) भू–प्राप्तावात्मनेपदी ( ५ ) धूञ्–कम्पने ( ६ ) मृजू–शौचालङ्करणयोः ( ७ ) मार्ग–अन्वेषणे ( ८ ) मृष–तितिक्षायाम् । (अथाग्लोपाः) ( ९ ) कथ–वाक्यप्रबन्धे । ( १० ) गण–संख्याने ( ११ ) शील–उपधारणे ( १२ ) अर्थ–उपयाच्ञायाम् ( १३ ) ज्ञप–ज्ञाने ज्ञापने च । अनदन्तोऽयम् । मिच्चेत्येके । ( इति चुरादयः ) । विकल्पेन भ्वादयश्चुरादय इति ।

## अथ कण्ड्वादिः

( १ ) कण्डूञ्–गात्रविघर्षणे ( २ ) मन्तु–अपराधे ( ३ ) हृणीङ्–लज्जायाम् ( ४ ) महीङ्–पूजायाम् ( ५ ) तिरस्–अन्तर्धौ ( ६ ) उषस्–प्रभातीभावे ( ७ ) भिषज्–चिकित्सायाम् ( इति कण्ड्वादयः ) । समाप्तोऽयमृजुधातुपाठः ।

●

# अथ संक्षिप्तपरिभाषापाठः

( १ ) व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम् ( २ ) यथोद्देशं संज्ञापरिभाषम् ( ३ ) कार्यकालं संज्ञापरिभाषम् ( ४ ) नानुबन्धकृतमनेकाल्त्वम् ( ५ ) नानुबन्धकृतमसारूप्यम् ( ६ ) यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ( ७ ) निर्दिश्यमानस्यादेशा भवन्ति ( ८ ) यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ( ९ ) अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम् ( १० ) एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ( ११ ) क्वचिदेकदेशोऽप्यनुवर्तते । ( १२ ) वर्णाश्रये नास्ति प्रत्ययलक्षणम् ( १३ ) प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणम् ( १४ ) संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ( १५ ) कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ( १६ ) पदाङ्गाधिकारे तस्य च तदन्तस्य च ( १७ ) प्रकृतिवदनुकरणम्भवति (१८) यस्मिन्विधिस्तदादावल्ग्रहणे ( १९ ) सर्वे विधयश्छन्दसि विकल्पन्ते ( २० ) एकदेशविकृतमनन्यवत् ( २१ ) परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः (२२) सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव (२३) कृताकृतप्रसङ्गि नित्यम् ( २४) असिद्धं बहिरङ्गमन्तरङ्गे (२५) अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते । ( २६ ) अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते ( २७ ) वार्णादाङ्गम् बलीयः ( २८ ) अकृतव्यूहाः पाणिनीयाः (२९)

येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति ( ३० ) क्वचिदपवाद-विषयेऽप्युत्सर्गोऽभिनिविशते ( ३१ ) पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् ( ३२ ) अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा ( ३३ ) पूर्वमपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ( ३४ ) अपवादो यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यते ( ३५ ) अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ( ३६ ) प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ( ३७ ) सूत्रे लिङ्गवचनमतन्त्रम् ( ३८ ) गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ( ३९ ) समासान्तो विधिरनित्यः ( ४० ) संनिपातलक्षणो विधिरनिमित्तम् तद्विघातस्य ( ४१ ) तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ( ४२ ) संज्ञापूर्वकविधेरनित्यत्वम् ( ४३ ) आगमशास्त्रमनित्यम् ( ४४ ) गणकार्यमनित्यम् ( ४५ ) सर्वविधिभ्यो लोपविधिरिड्-विधिश्च बलवान् ( ४६ ) उपपदविभक्तेः कारकविभक्तिर्बलीयसी ( ४७ ) लक्षण-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ( ४८ ) पर्जन्यवल्लक्षणप्रवृत्तिः ( ४९ ) पूर्वत्रासिद्धीयमद्वित्वे ( ५० ) सम्प्रसारणं तदाश्रयञ्च कार्यं बलवत् ( ५१ ) श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च। यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ ( ५२ ) अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ( ५३ ) पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ( ५४ ) ज्ञापकसिद्धं न सर्वत्र ( ५५ ) निमित्तापाये नैमित्तिकस्याप्यपायः। ( ५६ ) त्यदादीनां सम्बोधनं नास्तीत्युत्सर्गः। इति परिभाषासंक्षेपः।

## पारिभाषिक-संज्ञार्थः

अन्वर्थसंज्ञा विहिता महर्षिभिः पुरातनैर्व्याकृतिशास्त्र-पारगैः।
कालप्रभावेण विलोपमागता तदर्थ-संज्ञानमुदाहरे कियत् ॥

अन्वर्थाः संज्ञा हि भूयस्यः सन्ति। पाणिनीयाष्टाध्याय्यां प्रायः तासां संख्या पञ्च-सप्ततिर्विद्यते। ता हि कमर्थं बिभ्रति इति साम्प्रतिका वैयाकरणा अपि छात्रा विस्मृतिं गताः सन्ति। यतो हि व्याकरणसंज्ञानामर्थस्याध्ययनाध्यापनपद्धति-रुच्छिन्नप्राया दृश्यते। इत्यत एव तामुज्जीवयितुमिहान्वर्थसंज्ञानामर्थकरणप्रकारदिङ् मया निर्दिश्यते। वैयाकरणविद्वांसोऽग्रे स्व-स्व-शिष्यान् स्वबुद्ध्या स्वयं समूह्या-ऽन्वर्थसंज्ञानामर्थान् बोधयन्तु इत्येव मेऽभ्यर्थना। ( १ ) 'प्रत्याहारः'—प्रत्या-ह्रियन्ते—संक्षिप्यन्ते वर्णा यत्र स प्रत्याहारः। इत्यत्र प्रति + आ-पूर्वकात् हृ-धा-

तोरधिकरणेऽर्थे घञि प्रत्यये धातोर्वृद्धौ निष्पन्नस्य प्रत्याहारशब्दस्यार्थज्ञानं सुशक्यम् भवति। ( २ ) 'ष्णान्ता षट्' इति सूत्रेण षष्, पञ्चन्, सप्तन्, अष्टन्, नवन्, दशन् इति षण्णामेव प्रातिपदिकानां ( शब्दानाम् ) इयं संज्ञा विद्यतेऽतोऽस्याः 'षट्' इति संज्ञाऽन्वर्था।'बहुवचनान्तः षष् शब्दः। यथा लोके अम्बुधयः समुद्राः चत्वार इति 'अम्बुधि समुद्रादि'—शब्देन चतुर्णां बोधो जायते ( ३ ) 'तिङ्शित्' 'सार्वधातुकम्'—इत्यत्र सार्वधातुकप्रत्ययाः तिङः शितः च सर्वेभ्य एव धातुभ्यः सर्वेषु च लकारेषूपतिष्ठन्ते। यद्यपि शित्प्रत्यया आर्द्धधातुकेषु बाधिता भवन्ति तथापि योगत उपस्थितिस्तु तेषां सर्वत्रैव विद्यत इति सार्वधातुकेति संज्ञाऽन्वर्था। ( ४ ) 'आर्धधातुकं शेषः'—आर्द्धधातुकप्रत्यया इट्, स्य, तास्, क्ति, तृच्, प्रभृतयोऽर्द्धेभ्य एव धातुभ्योर्द्धेष्वेव लकारेषु भवन्तीति तेषामार्धधातुकसंज्ञाऽन्वर्था। ( ५ ) 'सर्वादीनि सर्वनामानि'—ये हि शब्दाः सर्वेषां प्रातिपदिकानां नामानि ( प्रतिपादका इति यावत् ) सन्ति, सर्वेषामेव नाम्नां यैः कार्यं साध्यते त एव शब्दाः सर्वनामानि। यथा हरिः अत्रासीत्, स क्व गतः। सीता वीरबालाऽस्ति, सा नारीणामुत्तमा—इत्यादिषु तच्छब्दः 'हरि' 'सीता' इत्येतयोरुभयोरपि नाम्नोः कार्य्यं स्वयं साधयतीति सर्वनामसंज्ञाया अन्वर्थता। ( ६ ) 'शि सर्वनामस्थानम्'—सर्वेषां नाम्नां ( प्रातिपदिकानां ) स्वरूपस्थितानां स्थानम्। यत्र हि नामानि स्वरूपं वर्द्धयित्वैव तिष्ठन्ति, भ-पद-संज्ञाकृतविकृतिं नैव गच्छन्ति, तत् सर्वनामस्थानम्। इत्यादि। ( ७ ) समानो वर्णः सवर्णः। लोकेऽपि सजातीया एव सवर्णाः कथ्यन्ते। ( ८ ) एति यातीति इत् गन्ता। एवमेव सर्वासां संज्ञानां स्वयमर्था ज्ञेयाः। सैषा दिग् निर्दिष्टा।

●

## अथ ऋजु-वार्त्तिकपाठः

( १ ) ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यम्। ( २ ) चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्। ( ३ ) तीयस्य ङित्सूपसंख्यानम्। ( ४ ) ऋवर्णान्नस्य णत्वं वाच्यम्। ( ५ ) अनाम्-नवति-नगरीणामिति वाच्यम्। ( ६ ) द्विपर्य्यन्तानामेवेष्टिः। ( ७ ) वृद्ध्यौत्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन। ( ८ ) नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन। ( ९ ) वांनावादयो ऽन्वादेशे वा वक्तव्याः। ( १० ) हिमारण्ययोर्महत्त्वे। ( ११ ) यवनाल्लिप्याम्। ( १२ ) यवाद्दोषे। ( १३ ) मातुलोपाध्याययोरानुग् वा ( १४ ) आचार्यादणत्वं च। ( १५ ) अभितः-

परितः-समयानिकषाहाप्रतियोगेऽपि । ( १६ ) अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम् । ( १७ ) अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः । ( १८ ) पात्राद्यन्तस्य न । ( १९ ) प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । ( २० ) शाकपार्थिवादीनां सिद्धये मध्यमपदलोपो वक्तव्यः । ( २१ ) इवेन समासो विभक्त्यलोपश्च । ( २२ ) सप्तम्युपमानपूर्व-पदस्योत्तरपदलोपो वक्तव्यः । ( २३ ) समुदाय-विकारषष्ठ्याश्चोत्तरपदलोपश्चेति वक्तव्यम् । ( २४ ) नञो-ऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपश्चेति वक्तव्यम् । ( २५ ) अभ्यर्हितं च । ( २६ ) सिज्लोप एकादेशे सिद्धो वक्तव्यः । ( २८ ) वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ( २९ ) छत्वममीति वाच्यम् । ( ३० ) गोयूँतावुपसंख्यानम् इति ।

## त्रिधा प्रत्याहारः

( १ ) यद्यपि—सूत्रानुसारिणः, ( २ ) सूत्रान्त्याक्षरानुसारिणः, ( ३ ) सूत्राद्यक्षरानुसारिणश्चेति । तथापि—केवलमेक एव सूत्रानुसारी प्रत्याहारः प्रदर्श्यते—

( २ ) एकं त्रीणि पुनश्चैकं चत्वार्य्येकं त्रयं त्रयम् ।
एकं द्वे षट् तथैवैकं चतुः पञ्च षडेव वै ॥

एकचत्वारिंशत्संख्यकाः प्रत्याहारा भवन्ति । तत्र 'उरण् रपरः १।१।५१' इति 'लण्' इति माहेश्वरषष्ठसूत्रस्थाकारम् इतं मत्वा रेफयोगेण 'र' प्रत्याहारः सिध्यति । तद्वदेव 'खफछठथ०' इत्यादिरुद्रसञ्ज्ञकसूत्रस्थथकाराकारमितं मत्वा खकार-योगेण 'ख' प्रत्याहारो महाप्राणाक्षरबोधोपयोगो भवतीति प्रत्याहारसिद्धिः । अन्ये तूपरनिर्दिष्टाः 'चयो द्वितीयाः शरि पौष्करसादेरिति वक्तव्यम्' ७।३।२८ इति चय् प्रत्याहारः । 'अमन्ताड्डः' ( ११९ उणादिः ) इति अम् प्रत्याहारः । वर्ग्याक्षराणां कृते 'जय्' प्रत्याहारः । इति प्रत्याहारपञ्चकमेलनेन ४६ षट्चत्वारिं-शत् प्रत्याहारा उपयोगिनो ज्ञेयाः ।

सूत्रानुसारतः सूत्रान्त्याक्षरानुसारत इह प्रत्याहाराः—

( १ ) अण् ( २ ) अक् इक् उक् ( ३ ) एङ् ( ४ ) अच् इच् एच् ऐच् ( ५ ) अट् ( ६ ) अण् इण् यण् ( ७ ) अम् यम् ङम् ( ८ ) यञ् ( ९ ) झष् भष् ( १० ) अश् हश् वश् झश् जश बश् ( ११ ) छव् ( १२ ) यय् मय् झय् खय् ( १३ ) यर् झर् खर् चर् शर् ( १४ ) अल् हल् वल् रल् झल् शल् । इत्येकचत्वारिंशत् ४१ प्रत्याहाराः ।

## स्थान-प्रयत्न-यत्न-प्राण-चक्रम्

| प्रत्याहारः | कण्ठ | तालु | ओष्ठ | मुर्द्धा | दन्त | संज्ञा | प्रयत्नतः |
|---|---|---|---|---|---|---|---|
| अक् | अ | इ | उ | ऋ | लृ | स्वतन्त्रस्वरः | विवृतः |
| वय् | कु | चु | टु | तु | पु | वर्ग, स्पर्श | स्पृष्टः |
| यण् | : | य | व | र | ल | अन्तः स्थ | ईषत्स्पृष्टः |
| शल् | ह | श | ⌣ | ष | स | ऊष्मा | ईषद्विवृतो मतान्तरे |

| | | | |
|---|---|---|---|
| एच् | ए = अ + इ । ऐ = अ + ए । ( कण्ठतालु )<br>ओ = अ + उ । औ = अ + ओ । ( कण्ठोष्ठम् )<br>अ संवृतोऽपि । अन्येऽचो विवृता एव । | विवृत<br>एच् | सन्धि-स्वरा इमे |

| यत्नः | प्रत्याहारः | संज्ञा |
|---|---|---|
| १—उदात्तानुदात्तस्वरिताः | अचः | स्वराः ( अकः ) स्वतन्त्राः, ( एचः ) सन्धिस्वराः |
| २—संवारनादघोषाः | हशः | मृदु-व्यञ्जनानि |
| ३—विवारश्वासाघोषाः | खरः | कठोरव्यञ्जनानि |

| प्राणाः | |
|---|---|
| अल्पप्राणाः | महाप्राणाः |
| प्रथम तृतीय-पञ्चम-वर्गवर्णाः<br>यणश्च = १९<br>यण् अम् जश् चय् प्रत्याहाराः=१९ | २ य ४ र्थ वर्गवर्णौ<br>शलश्च = १४<br>झष्, ख इति प्रत्याहारः, शल्=१४ |

स्थान-प्रयत्न-यत्नाश्च प्राणाश्चेति बुधैर्लिमाः ।
प्रत्याहारप्रकारेण मातृका-विधया तथा ॥

○

## अथ पाणिनीये समाज-स्थितिः

यथा समाजे जनाः परस्परं द्रव्य-गुण-कर्माधिकाराणाम् आदानप्रदानम् कुर्वन्ति, सूत्राण्यपि सूत्रान्तरात् शब्दार्थयोराकर्षापकर्षादिकं तथैव विदधति ।

जनानामधिकारिणा यथा अल्पसंख्यबहुसंख्यजनानामधिपतयो भवन्तो द्रव्यदानेन स्वाधिकारानुरूपं कार्यं कुर्वन्ति, एवमधिकार-भूतसूत्राण्यपि स्वाधिकृतपद-प्रदानेन शास्त्रार्थसंरक्षणं कुर्वन्ति। ग्रामादारभ्य प्रान्त-राष्ट्र-देशावधि सर्वत्र समाजे समुत्थिता विवादाः संघर्षाश्च यथा न्यायालये निर्णीयन्ते तथैव सूत्राणामपि व्यवहारो दर्शितो महर्षि-पाणिनिना। तथाहि—'विप्रतिषेधे परं कार्यम्, १-४-२' 'पूर्वत्रासिद्धम् ८-२-१' 'असिद्धवदत्राभात् ६-४-२२' इत्यादि-निर्णायक-सूत्र-विमर्शात् स्पष्टं ज्ञायत एव। तत्र सर्वोच्चन्यायालयः परिभाषारूपिण्या 'परनित्यान्तरङ्गापवादानाम् उत्तरोत्तरं बलीयः' इति स्त्रिया सञ्चाल्यते। जना यथा आमोदप्रियाः क्रीडापरा भवन्ति, तथैव क्रीडनकानीव सूत्राण्युपलभ्यन्ते। कर्म-करादि-सेवका नापितप्रभृतयश्च नगरपालिकावणिक्परिषदश्च यथा समाजगोचरास्तथा 'उपदेशेऽजनुनासिक इत् १-३-२', 'हलन्त्यम् १-३-३' 'चुटू १-३-७'—इत्यादीनि इत्संज्ञानिर्देशकसूत्राणि चतुर्धुरीण-स्थानानि। 'तस्य लोपः १-३-९' इति सूत्रं सम्मार्जनी-प्रतिमूर्त्तिः। "राम + अस्" इत्यादि-रूप-सिद्धिप्रक्रियास्थलेषु शतरञ्ज-गुटिका इव सूत्राणां प्रयाणानि द्रष्टुम् शक्यन्ते। कुतूहलम् चैतद्भवति कुतूहल-प्रियाणां छात्रकदम्बानाम्। यथा राम + अस् इत्यत्र प्रथमाबहुवचने क्रमेण पूर्वम् "आद् गुणः" इति प्रथमा गुटिका, "अकः सवर्णे दीर्घः" इति द्वितीया, "अतो गुणे" इति तृतीया, 'प्रथमयोः पूर्वसवर्णः' इति चतुर्थी। इयं चतुर्थी गुटिका हि स्वार्थं सफलयन्ती विजयते।

'यथोद्देशं संज्ञापरिभाषम्' आपणस्थितनापित इव, 'कार्यकालं संज्ञा-परिभाषम्' पर्यटकनापित इव प्रसाधनं करोति शब्द-रूप-स्वामिनाम्। "परनित्यान्त-रङ्गापवादानामुत्तरोत्तरं बलीयः" इति एषा परिभाषा सर्वोच्च-न्यायाधीश इव सेविका। 'निरवकाशो विधिरपवादः' इति परिभाषया यत्र कस्यापि जनस्य दुर्बलता सामाजिकी दुरवस्था च सूच्यते, तत्र पाणिनिन्यायो हि तस्मै प्रश्रयं ददातीति कीदृग् दुर्बलरक्षान्यायो निर्दिश्यते। 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्याद्यन्या अपि परिभाषा विचारपथमायाताः सत्यः समानरूपेण समाज-व्यवस्थायां व्यवहारं शब्दव्युत्पत्तिं च युगपद् बोधयन्ति।

"नित्यं हि पदानामर्थैः सम्बन्धः" इति न्यायोऽप्यत्रानुसन्धेयः। अङ्गिनं विहायाङ्गस्यावस्थानमपि न सम्भवत्यतो हि ये शब्दा व्युत्पन्नाः पाणिनीयेन शास्त्रेण तैः प्राचीनपाणिनिकालिकेतिहासावगतावपि साहाय्यं क्रियते। कतिपयैः प्राच्य-पाश्चात्यविद्वद्वरैः प्रयत्नोऽपि कृतो दरीदृश्यते। अर्वाचीन एव डा० वासुदेवशरण

अग्रवालो महाप्रबन्धं निर्मितवानस्ति एतद्विषयमधिकृत्य पाणिनिकालीन-भारतेतिहास इति नाम्ना। अन्योऽपि कश्चनाध्यवसायी सोत्साहो जिज्ञासुरधिगन्तुं शक्नोत्यनेकान् विषयान् पाणिनि-परम्परा-पालित-शास्त्रकदम्बेभ्य इत्यलम् ।

'समाज-शास्त्रावगतिर्भवेदितस्तथेतिहासादि नयादि बुध्यते ।
न केवलेयम् पदसिद्धिसंहिता द्विजत्वसम्पादनसञ्चिकाऽद्भुता ॥'[1]

## इत्संज्ञाऽधिकाराश्च

उपदेशेऽजनुनासिक इत् १।३।२
,, हलन्त्यम् ,, ३
न विभक्तौ तुस्माः ,, ४
,, आदिर्ञिटुडवः ,, ५
,, ,, षः प्रत्ययस्य ,, ६
,, ,, चुटू ,, ७
,, ,, लशक्वतद्धिते ,, ८
{ तस्य लोपः ९

---

१. रङ्गशालायां द्वौ छात्रौ प्रविष्टौ शतरञ्जं क्रीडतः—शतरञ्जक्रीडा अभिनीय कियती निर्दिश्यते। तथाहि—प्रथमा बहुवचने राम + अस् इति स्थितौ ।

प्रथमः छात्रः—'आद्गुणः ६।१।८७' इति गुणैकादेशं कृत्वा रामस् इत्येवाहं करोमि— इति मे प्रथमा गुटिका । चल त्वं किं करोषि ?

द्वितीयः छात्रः—अहमत्र परत्वात् 'विप्रतिषेधे परं कार्यम् १।४।२' इति सूत्रबलात् 'अकः सवर्णे दीर्घः ६।१।१०१' इति दीर्घैकादेशं कृत्वा रामास् करोमि । चल त्वं किं करोषि ?

प्रथमः छात्रः—अये भ्रातः ! 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषाबलाद् अहम् 'अतो गुणे ६।१।९७' इति पररूपैकादेशे पुनः रामस् इत्येवं करोमि। चल त्वं किं करोषि ?

द्वितीयः—अहो भ्रातः ! 'पूर्वं पठिता येऽपवादास्तेऽनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषाबलाद् अहम् 'प्रथमयोः पूर्वसवर्णः ६।१।१०२' इति पूर्वसवर्णदीर्घं कृत्वा रामास् इति विधाय, सस्य पदान्तत्वात् 'ससजुषो रुः ८।२।६६' इति रुत्वे, अनुबन्धलोपे, 'खरवसानयोर्विसर्जनीयः ८।३।१५' इति विसर्गे रामाः इत्येव सिद्धं पदं विदधामीति मे जयः। तव तु पराजय इति शतरङ्गक्रीडा समाप्ता । निर्गतौ छात्रौ ।

## सूत्राधिकार-श्लोकाः

संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च निषेधश्चेति सप्तकम् ॥ १ ॥
संज्ञाश्च परिभाषाश्चाद्य-द्वितीयाङ्घ्रिगाः पुरः ।
इत्सूत्राणि तृतीयाङ्घ्रौ लङ्—परस्मैपदानि च ॥ २ ॥
तुर्याङ्घ्रौ कारकं ज्ञेयं, द्वितीयाऽध्यायगोचरः ।
समासश्च विभक्त्यर्थः पुरःपादत्रयावधिः ॥ ३ ॥
चतुर्थे एकवद्भावो धात्वादेशस्ततोऽस्य लुक् ।
तृतीये धातुविहिताः प्रत्ययास्तद्विकारिणः ॥ ४ ॥
तुर्ये पञ्चमके चैव शब्दतश्च समासगाः ।
षष्ठे प्रकृतिकार्याणि सन्धयः सौवरो विधिः ॥ ५ ॥
तृतीयाङ्घ्रावलुग् ज्ञेयः पूर्वप्रकृतिविकृतिः ।
सोऽङ्गाधिकारः षष्ठान्तात् सप्तमान्तं प्रयाति वै ॥ ६ ॥
सप्तमे प्रत्ययस्थानि द्विष्ठानि च ततः परम् ।
अष्टमे पद-द्वित्वं प्राक् ततो वै वसनसादयः ॥ ७ ॥
पदस्याधिकृतिः पूर्वं संहिताधिकृतिस्ततः ।
पूर्वत्र यान्यसिद्धानि त्रिपाद्यां तान्यवेशयत् ॥ ८ ॥

## अथ सामान्यतोऽधिकाराः

'कारके १-४-२' इति 'तत्प्रयोजको हेतुश्च १-४-५५' इति यावत् याति ।

'प्रत्ययः' 'परश्च' ३-१-१,२ 'ङ्याप्प्रातिपदिकात् ४-१-१', तथा 'तद्धिताः ४-१-७६'—सर्वे इमे ऽधिकाराः पञ्चमान्तं यान्ति ।

'धातोः ३-१-९१' इति अध्यायान्तं याति ।

'स्त्रियाम् ४-१-३' इति 'समर्थानां प्रथमाद्वा ४-१-८२' इति यावत् ।

'समासान्ताः ५-४-६८' इति पादान्तम् ।

'संहितायाम् ६-१-७२' इति 'पारस्करप्रभृतीनि च संज्ञायाम्' ६-१-१५७ इति यावत् ।

'अङ्गस्य ६-४-१' इति सप्तमाध्यायान्तम् ।

'पदस्य ८-१-१६' इति 'इडाया वा ८-३-५४' इति यावत् ।

'पूर्वत्रासिद्धम् ८ २-१' इति अध्यायान्तम् ।

'तयोर्य्वावचि संहितायाम् ८-२-१०८' इत्यपि अध्यायान्तमेव ।

'सहेः साडः सः ८-३-५६' इत्यतः स इत्यस्य 'इण्कोः ८-३-५७' इत्यस्य च ११९ सूत्रावधि अधिकारः । 'रषाभ्यां नो णः समानपदे ८-४-१' इति सूत्रस्याधिकारः ३९ सूत्रावधि याति ।

## अथ पाणिनीय-शिक्षा

आत्मा बुद्धया समेत्यार्थान्मनो युङ्क्ते विवक्षया ।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् ।
प्रातः सवनयोगं तं छन्दोगायत्रमाश्रितम् ॥
गीती शीघ्री शिरःकम्पी तथा लिखित-पाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥
माधुर्य्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्य्यं लय-समर्थं च षडेते पाठका गुणाः ॥
मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्र-शत्रुः स्वरतोऽपराधात् ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥
संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥
धातुसूत्रगणोणादि–वाक्य–लिङ्गानुशासनम् ।
आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥
ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥
क्विबन्ताश्च विडन्ताश्च विजन्ताश्चेति धातवः ।
ते धातुत्वं न जहति शब्दत्वं प्राप्नुवन्ति च ॥
नकारजावनुस्वारपञ्चमौ झलि जातुषु ।
सकारजः शकारश्चर्षाट्टुवर्गस्तवर्गजः ॥

## विविध-कारिकाः

हलः सेट्-सिचि वृद्धिर्नातो हलादेर्लघोस्तु वा ।
स्याल्लृरान्तस्य वदि-व्रज्योर्न श्वसक्षणह्यचेदिति ॥
रधि-नंशि-तृपि-दृपि-द्रुहि-ष्णुहि-मुहि-ष्णिहः ।
रधादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः ॥
मुञ्चतिर्लुम्पतिश्चैव विदिर्लिम्पतिरेव च ।
सिचिः कृतिः खिदिश्चैव पिशिश्चाष्टौ मुचादयः ॥
एकाजूर्णुअदन्ता ये दीधी-वेव्योश्च जीर्यतेः ।
जागर्तेश्च दरिद्रातेर्नानुनासः प्रयुज्यते ॥
रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ।
जक्षितिश्चेति विज्ञेयो रुदादिः पञ्चको गणः ॥
जक्षि-जागृ-दरिद्रा-शास् दीधी-वेवी-चकास् तथा ।
अभ्यस्तसंज्ञाः सप्तैते साभ्यासा ये च धातवः ॥
यजिर्वपिर्वहिश्चैव व्येञ्-वेञौ श्वयतिस्तथा ।
वद्-वसौ ह्वयतिश्चैव स्मृता नव यजादयः ॥
लुम्पेदवश्यमः कृत्ये तुं-काममनसोरपि ।
समो वा हित-ततयोर्मांसस्य पचि युड्-घञोः ॥
यस्य षष्ठी चतुर्थी स्याद् विहस्य च विहाय च ।
अहं कथं द्वितीया स्याद् द्वितीया स्यामहं कथम् ॥
षट्-पदानीह सूत्राणि पाणिन्यष्टकमध्यतः ।
मन्त्रवत्सम्प्रयोज्यानि सदा वृश्चिकदंशने ॥

कृतं कालिदासेन समाधानम्—पिशाचोक्तेः—(१)

एको गोत्रे स भवति पुमान् यः कुटुम्बं बिभर्ति,
स्त्री पुंवच्च प्रभवति यदा तद्धि गेहं विनश्येत् ।
वृद्धो यूनाऽभ्युदयमनसा सर्वथा सेवनीयः,
सर्वस्य द्वे सुमति-कुमती सम्पदापत्तिहेतू ॥

---

(१) पिशाचप्रश्नसूत्राणि क्रमशः—४।१।९३, १।२।६६, ६५।८।१।१

पक्षि-मत्स्य-मृगान् हन्ति परिपन्थं च तिष्ठति।
व्रातेन जीवत्यधुना न वशः पूर्ववत् सनः॥
कीदृग्धीरः पदं ब्रूते, को रोगी, कश्च नास्तिकः।
कीदृक् चन्द्रं न पश्यन्ति, तत् सूत्रं पाणिनेर्वद॥

अनिट्कारिकाः—

अनिट् स्वरान्तो भवतीति दृश्यतामिमे तु सेटः कथिता महर्षिभिः।
ऊदन्त-ॠदन्त-ऋताञ्च वृङ्-वृञौ श्वि-डीङिवर्णेष्वथ शीङ्श्रिञावपि॥
गणस्थ ऊदन्त उताञ्च रु-ष्णुवौ क्षुविस्तथोर्णोतिरथो यु-णु-क्षणवः।
इति स्वरान्ता निपुणैः समीरितास्ततो हलन्ता अपि सन्निरूपिताः॥

अन्यच्च--

ऊद्-ॠदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः।
वृङ्-वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः॥

( द्र० काशिका 'एकाच उपदेशेऽनुदात्तात् ७।२।१०' )

## सन्धि-कारिकाः

( अच्सन्धि-पद्यम् )

( जरौ जरौ जगाविदं वदन्ति पञ्चचामरम् । )

अकोऽकि दीर्घ-सन्धिमाहुरादगुणो भवेदिकि-
त्ववर्ण एचि वृद्धिमेत्त्विको यणच्ययादयः ।
स्युरेच एङ एत्यति प्रपूर्वता पदान्तगात्
सदा द्वितीयमोत्वमूत्वमेत्वमेति नान्यताम् ॥ १ ॥

( विसर्गसन्धि-पद्यम् )

अतोऽति रुत्वमुत्वमेत्यतो हशोदमेव हि
त्वर्णतोऽशि रुत्वमेति लोपगां यकारताम् ।
कखो≍पफोर्विसर्ग एति वार्द्धतां स वा शरि-
चछवि त्रयं शषं समेति तस्य वर्ण-साम्यतः ॥ २ ॥

( हल्सन्धि-पद्यानि )

सतू शचू षटू समेत्य तत्सवर्णतामितः
पदान्तझल्तु जश् सदा स चर् खरि प्रजायते ।
स ञम् ञमि प्रयाति वा लघोः परोऽचि ङम् सदा
द्विरेति वा पदान्तझय्परोऽमि शश् छकारताम् ॥ ३ ॥

पदान्तझय्परो ह एति वा पुरः सवर्णतां
लघुं तुगेति सन्धिगः छकारवर्णके परे ।
तवर्ग एति लौ परे लकारतामिति ध्रुवं
स्वनुस्वरंस्त्रयं समेति नः सवर्णतश्छवि ॥ ४ ॥

नमौ पदस्य मध्यगावनुस्वरौ परे झलि
त्वनुस्वरो यथि ध्रुवं सवर्णतां स विन्दते ।
म आश्वनुस्वरत्वमेति हल्परः पदान्तगः
स वैत्यनुस्वरः पदान्तगः सवर्णतां यथि ॥ ५ ॥

( उपसंहार-पद्यम् )

स एष एत आल्यरौ विसर्गशून्यतां सदा
रि रश्च लोपमेति तत्पुरोऽण्समेति दीर्घताम् ।
सुबुद्धिभिः सुपाठकैः स्वसन्धिरोगनाशकैः
समग्र-सन्धिरुच्यते रसैर्हि पञ्चचामरैः ॥ ६ ॥

( रैश्चतुर्भिर्युता स्रग्विणी सम्मता )

स्थानयत्नैर्हलां सन्धिराधीयतां
स्थान-मात्रप्रभावादचां सन्धयः ।
अशखरोर्भेदतः स्यात् स वैसर्गिको
रुर्भवेल्लोपभृद् योऽप्यवर्णादशि ॥ ७ ॥

हृश्यति स्यादतो रुः स उः सन्धिगः
स्थान-साम्येन खर्षु व्यवस्था मता ।
आलि चैषोऽपि सोऽयं विसर्गप्रहृद्
रो रि लोपे पुरोऽण् दीर्घतां विन्दते ॥ ८ ॥

इति श्रीक्षेमधरिणा महामहाध्यापकेन व्याख्यानवागीशेन शाण्डिल्यान्ववायेन दर्शनकेशरिणा श्रीगोपालशास्त्रिणा सङ्कलितम् सङ्क्षिप्ताष्टाध्यायीसूत्रपाठापराभिधं ऋजुपाणिनीयं समाप्तम् ।

